प्राप्ताभिषेकः सानुज्ञः कृतकृत्यः प्रहर्षितः ।
वदेत् सु[1]मधुरां वाणीं जगदानन्दकारिणीम् ॥ २९ ॥
अद्य मे सफलं जन्म सफलं जीवितं च मे ।
अद्य बुद्धकुले जातो बुद्धपुत्रोऽस्मि साम्प्रतम् ॥ ३० ॥
कल्पार्णवान्महाघोराज्जन्मवीचिसमाकुलात् ।
तारितोऽहं त्वया नाथ क्लेशपङ्क[2]सुदुस्तरात् ॥ ३१ ॥
निष्पन्नमिव चात्मानं जाने[3] युष्मत्प्रसादतः ।
बोधये न च मे काङ्क्षा प्रहीणाः सर्ववासनाः ॥ ३२ ॥
निपत्य पादयोर्भक्त्या प्रहृष्टोत्फुल्ललोचनः ।
[4]यद् यदिष्टतरं द्रव्यं तत् तदेव निवेदयेत् ॥ ३३ ॥
निरवग्रहचित्तेन गुरुणाऽपि कृपालुना ।
शिष्यस्याग्रहनाशाय [5]ग्राह्यं तस्य हि[6]ताय च ॥ ३४ ॥
ततः प्रणम्य सम्पूज्य दत्त्वा च गुरुदक्षिणाम् ।
एवं विज्ञापयेद्[7] भूयः सम्प्राप्ताभिमतास्पदः[8] ॥ ३५ ॥
अधुना भवद्बुद्धाग्रः सुप्रसादो ममान्तिके[9] ।
यथा तेऽनुत्तरां बोधिं प्रसादात्[10] साधयाम्यहम् ॥ ३६ ॥
निष्पाद्यानुत्तरं बौद्धं[11] पदं सर्वाग्रपूजितम् ।
तत्रै[12]व स्थापयिष्यामि सत्त्वांस्त्रिभववर्त्तिनः ॥ ३७ ॥

---

[1] E ०र्यं ।
[2] DN ०ज्ञात्० ।
[3] BCE जातेषु ।
[4] A reads differently: यद्यदिष्टतरं द्रव्यं विशिष्टतरमेव वा । गायें स्नेहानुरक्ता वा तत्तदत्र निवेदयेत् ॥
[5] DN तद्या० BCE सग्रा० ।
[6] BCDEN तद्वि० ।
[7] BN ०यते ।
[8] EC ०स्य च ।
[9] A सदा मम ।
[10] EC ०भाव्य तत् DB ०भावात् ।
[11] DN ०त्तरां बोधिं ।
[12] BCDEN तेनै० ।

देयोऽभिषेको विधिभिर्यथोक्तैः
शिष्याधिमुक्तिं मनसाऽवगम्य ।
उदारगम्भीरनयाधिमुक्तो
वा[1]चैव दद्यादभिषेकरत्नम् ॥ ३८ ॥

प्राप्ताभेया[2]भिषेकप्रवरकुलिशभृद्दुर्लभातुल्यसम्पत्[3]-
सम्भोगक्षेत्रलक्ष्मीग्रहणकृति[4]महाबोधिचित्ताभिषेकः ।
लब्धानुज्ञस्त्रिलोकी[5]दुरितरिपुजयारम्भसन्नद्धबुद्धिः
बोधावारोप्य चित्तं विपुलमिह चरेन्निर्मलं
त[6]त्त्वयोगी ॥ ३९ ॥

इति प्रज्ञोपायविनिश्चयसिद्धौ बोधिचित्ताभिषेकस्तृतीयः
परिच्छेदः ।

---

[1] A ०क्तिर्वा० ।
[2] EC ०रोका० ।
[3] EC ०म्यक् ।
[4] A ०ता० ।
[5] BCE ०के ।
[6] EC ०सत्त्व० ।

# चतुर्थः परिच्छेदः ।

अथातः कथ्यते स्पष्टं प्रज्ञोपायाग्रभावना ।
परार्थारब्ध[1]वीर्याणां साधकानां हिताय वै[2] ॥ १ ॥
यां विभाव्य न संसारे घोरे[3] दुस्तरवारिधौ ।
निर्वाणेऽपि न[4] तिष्ठन्ति योगिनः स्वार्थमात्रके ॥ २ ॥
यस्याः प्रकर्षपर्यन्तं बुद्धानाममला[5]कृता ।
हानिवृद्धिविनिर्मुक्ता जाता बोधिरनुत्त[6]रा ॥ ३ ॥
पञ्चस्कन्धादिकान् धर्मान् नातिक्रामति यो न च ।
कदाचित् परिगृह्णाति सर्वधर्मसमा[त्मताम्][7] ॥ ४ ॥
न शून्यभावनां कुर्यात् नापि चाशून्यभावनाम् ।
न शून्यं सन्त्यजेद् योगी न चाशून्यं परित्यजेत् ॥ ५ ॥
अशून्यशून्ययोर्ग्राहे जायतेऽनल्पकल्पना ।
परित्यागे च सङ्कल्पस्तस्मादेतद् द्वयं त्यजेत् ॥ ६ ॥
उभयग्राह्यसन्त्यागाद्[8] विमु[9]क्तो विगतास्पदः ।
अहमित्येष सङ्कल्पस्तस्मादेतद् द्वयं[10] त्यजेत् ॥ ७ ॥
निर्विकारो निरासङ्गो[11] निष्काङ्क्षो गतकल्मषः ।
आद्यन्त[12]कल्पनामुक्तो व्योमवद् भावयेद् बुधः ॥ ८ ॥

---

[1] EC ०लब्ध०, D ०ब्धन्द० ।
[2] A च ।
[3] A ०र० ।
[4] DN च न, EC न च ।
[5] EC ०र्तां ममता० ।
[6] EC ०निवृत्त०, D ०रनन्त० ।
[7] MSS० समा ।
[8] EC ०परित्याग० ।
[9] EC विनिमु० ।
[10] DN ०तच्च सं० ।
[11] A ०षङ्गो ।
[12] B ०न्तो ।

न चापि सत्त्ववैमुख्यं कर्त्तव्यं करुणावता।
सत्त्वो नामा[1]स्ति नास्तीति न चैवं परिकल्पयेत्॥ ९॥
निष्प्रपञ्चस्वरूपत्वात्[2] प्रज्ञेति परिकीर्त्यते।
चिन्तामणिरिवाशेषसत्त्वार्थकरणं कृपा॥ १०॥
निरालम्बपदे प्रज्ञा[3] निरालम्बा[4] महाकृपा।
एकीभूता धिया सार्द्धं गगने गगनं यथा॥ ११॥
न य[5]त्र भावकः कश्चित् नापि काचिद् विभावना।
भावनीयं न चैवास्ति सोच्यते तत्त्वभावना॥ १२॥
न कर्त्ता कश्चिदत्र[6]यत्र भोक्ता[7] नैवात्र[7] विद्यते।
कर्त्तृभोक्तृविनिर्मुक्ता परमार्थविभावना॥ १३॥
न चात्र ग्राह[8]कः कश्चित् न वा कश्चित् समर्पकः।
न प्र[9]हार्यमतः किञ्चित् ग्राह्यं नैवात्र विद्यते॥ १४॥
पश्यतां सर्वरूपाणि शृण्वतां शब्दमेव च।
जल्पतां हसतां वापि[10] प्राश्नतां विविधान् रसान्॥ १५॥
कुर्वतां सर्वकर्माणि अन्यत्र गत[11]चेतसाम्।
अजस्रं योगिनां योगो जायते तत्त्ववेदि[12]नाम्॥ १६॥
एतद्द्वयमित्युक्तं बोधिचित्तमिदं परम्।
वज्रं श्रीवज्रसत्त्वं च सम्बुद्धो बोधिरेव च॥ १७॥

---

[1] A सत्त्वानाम॰।
[2] EC ॰भावत्वात्, BDN ॰रूपा त्वं, A ॰रूपत्व।
[3] D प्रोक्ता।
[4] N ॰म्ब॰।
[5] ABCE चा॰।
[6] D ॰क्त्य।
[7] D ॰व।
[8] EC बाध॰।
[9] EC परि॰।
[10] A चैव।
[11] EC ॰त्रागम्य॰।
[12] EC ॰योगि॰।

प्रज्ञापारमिता चैषा सर्वपारमितामयी ।
समता चेयमेवोक्ता सर्वबुद्धाग्रभावना ॥ १८ ॥

अत्रैव सर्वमुत्पन्नं जगत् स्थिरचलात्मकम् ।
अनन्ता बोधिसत्त्वाश्च सम्बुद्धाः श्रावकादयः ॥ १९ ॥

तदेव भावयेद् योगी भावाभाववियोगतः ।
भावाभावविनिर्मुक्तो भावयन् सिध्यते लघु ॥ २० ॥

अशेषदोषविद्वेषी संक्लेशविमुखो ध्रुवम् ।
अनन्तास्तस्य जायन्ते श्रीमन्तः सौगता गुणाः ॥ २१ ॥

अनल्पसङ्कल्पतमोऽभिभूतं
प्रभञ्जनोन्मत्ततडिच्चलं च ।
रागादिदुर्वारमलावलिप्तं
चित्तं हि संसारमुवाच वज्री ॥ २२ ॥

प्रभास्वरं कल्पनया विमुक्तं
प्रहीणरागादिमलप्रलेपम् ।
ग्राह्यं न च ग्राहकमग्रसत्त्वं
तदेव निर्वाणवरं जगाद ॥ २३ ॥

अतश्च नातः परमस्ति किञ्चित्
निमित्तभूतं बहुदुःखराशेः ।
अनन्तसौख्योदयहेतुभूतं
मुमुक्षवो नास्ति ततः परं च ॥ २४ ॥

---

[1] EC ॰दि॰ ।
[2] EC भाव॰ ।
[3] DN ॰च ।
[4] EC त्त्वाः ।
[5] E ॰स्तु नैतत्, C ॰स्तु नातत् ।
[6] C तत्प॰ ।

अशेषदुःखक्षयबद्धकक्षैः
सम्बुद्धसत्सौख्यमवाप्तुकामैः ।
चित्तं स्थिरीकृत्य विचार्य[1] यत्नात्[2]
तस्य स्वभावः क्रियतां स्वभावः ॥ २५ ॥

यावत् कल्पतमः पटेन गुरुणा रुद्धं मनो जन्मिनां
तावद् दुःखमनन्तकं विरहितं स्यात् तेन यावत् ततः[3] ।
तावत् सौख्यमुदारमप्रतिसमं तात्पर्यमार्यैरतः
कार्यं तत्कृ[4]तये स्वयं[5] सुविपु[6]लां रक्ष्यन्ति तत्सङ्गतिम् ॥ २६ ॥

इति प्रज्ञोपायविनिश्चयसिद्धौ तत्त्वभावना
नाम चतुर्थः परिच्छेदः ।

---

[1] EC ०रयन् ।
[2] D ० नात्तत्, EC तत् ।
[3] DN न्तु तत् ।
[4] EC च्च० ।
[5] omitted in EC.
[6] A ०म० ।

# पञ्चमः परिच्छेदः ।

अथातः कथ्यते स्पष्टं सङ्कल्पारिनिःसूदनी ।
सर्वधर्मसमुद्भूता तत्त्वचर्या निरुत्तरा ॥ १ ॥

हिताय बुद्धपुत्राणां सम्बोधौ ये व्यवस्थिताः ।
तत्त्वतोऽनङ्गवज्रेण प्रज्ञापारमिता परा ॥ २ ॥

जन्मार्णवान्महाघोराज्जराधूर्मिसमाकुलात् ।
तारणी सर्वभूतानां नौकेव क्षेमगामिनी ॥ ३ ॥

क्षिप्रसिद्धिकरा दिव्या हृद्या सर्वगुणोदया ।
चिन्तामणिरिवाद्भुता ईप्सितार्थप्रसाधिका ॥ ४ ॥

विनाऽनया वज्रधरप्रशस्तया
　　समस्तसम्बुद्धगुणाग्रभूतया ।
न जायते सिद्धिरतो मुमुक्षवः
　　चरन्तु चर्यामतुलामिमां बुधाः ॥ ५ ॥

मुरारिशक्रत्रिपुरारिवित्तद[10]-
　　ब्रह्मादिकाभ्यर्चितपादपङ्कजाम् ।
इमां चरित्वा त्वघनाशिनीं द्रुतं[11]
　　परामवाप्ताः पदवीं तथागताः ॥ ६ ॥

---

1 A तथ्यं ।
2 ECBD ०ल्पपरि० ।
3 ECDN ०ञ्च० ।
4 EC ग० ।
5 ABCDE ०वो० ।
6 BCE ०मङ्ग० ।
7 ABCE ०ङ्क० ।
8 CE स० ।
9 CE ०त्र० ।
10 ABCE त्वपद (द?) ।
11 CE ०पारिनिष्ठ० ।

सङ्गू[1]तचर्या गदितेयमेव
श्रीवज्रसत्त्वेन जगद्धितेन।
अन्या वि[2]चित्रा तु समस्तनाना-
विनेयलोकस्य वशेन यातु[3] ॥ ७ ॥
सिद्धिः प्रसिध्यत्यखिला यथोक्ता
विचित्रचर्याभिरनुत्तरा तु।
समन्तभद्रातुलसिद्धिरार्या
सैवेति[4] वज्री भगवान् जगाद ॥ ८ ॥
प्रणम्य सर्वथा[5] नाथं श्रीमदाचार्यवज्रिणम्।
आश्रयेद् गुह्यचर्यां तु कृतकृत्यो महामतिः ॥ ९ ॥
ततः स्वच्छन्दमाभूय सर्वासङ्गबहिर्मुखः।
विचरेत् तत्त्वयुक्तात्मा केसरीव समन्ततः ॥ १० ॥
यथाभूतार्थसम्वेत्ता जगदुद्धरणाशयः।
सम्यग्दृष्टिप्रवृत्तात्मा [6]दृढचित्तो निराश्रयः ॥ ११ ॥
स्वप्नमायोपमं सर्वं[7] स्कन्धधात्वादिलक्षणम्।
त्रैधातुकमिदं तद्वत्[8] ज्ञात्वेत्थं च[9] समासतः ॥ १२ ॥
कौशल्यस्थानसिद्धं तु जीवितैश्वर्यसङ्गमम्[10]।
तथाष्टलोकधर्मं च सर्वं त्यक्तातिदूरतः ॥ १३ ॥
अप्रकम्प्यः[11] सदा भूत्वा निर्द्वन्द्वः कृतनिश्चयः[12]।
षट्पारमितायोगेन बुद्धसिद्धिप्रसिद्धये ॥ १४ ॥

---

1 EC ॰सुङ्ग॰।
2 ABCE च।
3 DN सेतु, A सा तु।
4 E सैव तु, ABDN नैवेति।
5 EC ॰तथा।
6 A परमानन्दसुन्दरः।
7 EC चित्त।
8 ABCE सर्वं।
9 EC इत्थं ज्ञात्वा।
10 ADN ॰र्यमेव च।
11 EC ॰ल्प॰।
12 BCE ॰संचयः।

सत्त्वार्थे[1]ऽतिशयासक्तो न सत्त्वपरिकल्प[2]कः ।
बोधावारोप्य चित्तं तु तत्त्वचर्यां समाश्रयेत् ॥ १५ ॥

प्रज्ञोपायसु[3]युक्तात्मा सर्वासङ्गपरा[4]ङ्मुखः ।
जन्मनौहैव सिध्येत तत्त्वाभ्यासकृतश्रमः ॥ १६ ॥

चित्तानुकूलयोगेन[5] स्वाधिष्ठानप्रदीपितः ।
आचरेत् समयं कृत्स्नं मन्त्र[6]मार्गप्रकाशितम् ॥ १७ ॥

विघ्नमारादिशान्त्यर्थं पञ्चामृतमधिश्रयेत् ।
एषा त्वनुत्तरा रक्षा विण्मू[7]त्रादिव्यवस्थिता ॥ १८ ॥

ज्वरा गरा विषा रोगा[8] डाकिन्युपद्रवा ग्रहाः ।
मारा विनायकाश्चैव प्रशमं यान्त्यनेन हि ॥ १९ ॥

नरोद्भवं तथाऽश्वं च श्रौद्रं[9] मातङ्गसम्भवम् ।
प्रदीपं भक्षयेत् प्राज्ञः श्वानमेव तु पञ्चमम् ॥ २० ॥

अन्यैश्च समयैर्दिव्यै[10]श्चित्तस्योत्कर्षकारकैः ।
मरुत्सं[11]क्षोभशान्त्यर्थं प्रीणयेत् चित्तवज्रिणम् ॥ २१ ॥

प्रज्ञापारमिता सेव्या सर्वथा मुक्तिकाङ्क्षिभिः ।
परमार्थे स्थिता शुद्धा संवृत्या तनु[12]धारिणी ॥ २२ ॥

ललनारूपमास्थाय सर्वत्रैव व्यवस्थिता ।
अतोऽर्थं वज्रनाथेन प्रोक्ता बाह्यार्थसम्भवा ॥ २३ ॥

---

[1] A ०था० ।
[2] DNB ०ल्पि० ।
[3] ACE ०स० ।
[4] BCE ०वर्हि० ।
[5] BCDEN यथा चित्तानुकूलेन ।
[6] B ०समनु० ।
[7] BDN ०म्र० ।
[8] A ज्वरारोगविषयोग०, DNB ज्वरारोगविषारोगा ।
[9] BCE शुक्र० ।
[10] A क्षारेस० ।
[11] EC मारुत० ।
[12] A रूप० ।

ब्राह्मणादिकुलोत्पन्नां मुद्रां वै अन्त्यजोद्भवाम् ।
दुःशीलां परमार्गां[2] च विकृतां विकलां तथा ॥ २४ ॥
जनयित्रीं स्वसारं च स्वपुत्रीं भागिनेयिकाम् ।
कामयन् तत्त्वयोगेन लघु सिध्येत साधकः ॥ २५ ॥
वंशादिसम्भवैः श्रव्यैश्चित्तस्योत्कर्षकारकैः[3] ।
करणैर्वाद्यमुद्राभिर्नानारसविचेष्टितैः ॥ २६ ॥
स्वाधिदैवतयोगेन पञ्चकामगुणैर्वरैः[4] ।
रूपाद्यैं चित्तरत्नस्य आत्मानं पूजयेत् सदा ॥ २७ ॥
प्रदीपाम्बुजवज्राम्बु[5]क्षीरपूजादिविस्तरैः ।
स्रक्चन्दनसुवस्त्राद्यैश्चित्तस्यानन्द[6]कारकैः ॥ २८ ॥
गम्यागम्यादिसङ्कल्पं नात्र कुर्यात् कदाचन ।
मायोपमादियोगेन भोक्तव्यं सर्वमेव हि ॥ २९ ॥
धर्मधातुसमुद्भूता न केचित् परिपन्थिनः ।
प्रभुञ्जीत यथाकामं निर्विशङ्केन चेतसा ॥ ३० ॥
सम्भोगार्थमिदं सर्वं त्रैधातुकमशेषतः ।
निर्मितं[7] वज्रनाथेन[8] साधकानां हिताय च ॥ ३१ ॥
अनन्तज्ञानसम्प्राप्ता वन्ध्या नैव[9] तथागताः ।
सततं भावनाशक्त्या निष्पिक्तादिषु का कथा ॥ ३२ ॥
सर्वभावस्वभावोऽयं बोधिचित्तस्वरूपतः ।
स एव भगवान् वज्री तस्मादात्मैव[10] देवता ॥ ३३ ॥

---

1 A शू॰ ।
2 ABCE ॰भार्यां ।
3 BCE शब्दै॰ ।
4 CE ॰स्याविकल्पकारैः ।
5 A ॰गन्धमाल्यादिसत्कारैः ।
6 BCDNE ॰लीन॰ ।
7 DN ॰मित्त ।
8 BCDEN ॰सत्त्वेन ।
9 BCE वन्दनैव, DN वन्दयेन्न ।
10 BCE स्वयमात्मैव ।

मण्डलेनोपवासेन मुद्रया चैत्यकर्मणा ।
आहुत्या मन्त्रजापेन पुस्तकाद्योपयोगेन च ॥ ३४ ॥
श्रीमता वज्रनाथेन येऽपि चान्ये निदर्शिताः ।
अधिमुक्तिवशाः[1] केचित् तैश्च किं तत्त्ववेदिनः[2] ॥ ३५ ॥
अमृता[र्थी][3] यथा तक्रं सारमादाय सन्त्यजेत् ।
एवं धर्मामृतं प्राप्य त्यजेन्निःशेषकल्पनाम् ॥ ३६ ॥
निर्विकल्पो यदा[5] धीमान् त्यक्तासङ्गो[7] निरास्पदः ।
तदा सिद्ध्येन्न[9] सन्देहश्चित्तं वज्रवचो यथा ॥ ३७ ॥
मुद्रालिङ्गनसंयोगात् वज्रावेशप्रवर्त्तनात्[1] ।
सक्षीराधरपानाच्च तत्कण्ठध्वनिदीपनात् ॥ ३८ ॥
विपुलानन्दसम्भोगात् तद्रूप[11]स्फोटनाद् ध्रुवम् ।
न चिरान्मन्मथो राजा वज्रसत्त्वः प्रसिध्यति ॥ ३९ ॥
तथा तथा प्रवर्त्तेत यथा न क्षुभ्यते मनः ।
संक्षुब्धे चित्तरत्ने तु सिद्धिर्नैव कदाचन ॥ ४० ॥
तस्मात् सिद्धिं परामिच्छन् साधको विगताग्रहः[11] ।
चित्तानुकूलयोगेन साधयेत् परमं पदम् ॥ ४१ ॥
गोमयाधारयोगेन छत्रं[12] सन्धार्यते यथा ।
चित्तसत्त्वं तथा धार्यं ... च ... ४२ ...

[1] A ०सत्त्वे० ।
[3] A ०वादिना ।
[5] AE च० ।
[7] BCE ०स्सङ्गो ।
[9] B पुनस्तथा, EC ०प्र
[11] DN गतोपद्रवा , E ग०
[12] DN च्छेय धा० ।

येन तेन प्रयोगेन[1] यत्र तत्र व्यवस्थितः ।
कालसङ्ख्यां परित्यज्य तत्त्ववेदी प्रसिध्यति ॥ ४३ ॥

प्रतिदिनमद्वयमसमं योऽनि[2]श्रमनु[3]सेवते चि[4]तत्त्वाग्रम् ।
वज्रोपममममलमसौ[5] कायं छायासमं लभते ॥ ४४ ॥

आम्रष्येत्थं सु[6]धीमान् प्रकृतिसुविपु[7]लान् प्रज्ञया सर्वधर्मान्
छेत्तुं[8] त्रैलोक्यदुःखं प्रतिदिनसुमहद्वीर्यसन्नाहन[9]द्धः ।
ध्यायेत् श्रीवज्रसत्त्वं सकलगुणनिधिं सर्वभावस्वभावः
चित्तं चारोप्य बोधौ विषयसुखरतः सिध्यतीहैव
धाम्नि[10] ॥ ४५ ॥

अनास्पदाः कल्पनया विमुक्ताः
स्वभावतः शुद्धतमाः समस्ताः[11] ।
अनात्मसंज्ञाविषयाः प्रकृ[12]त्या
स्वप्नेन्द्रजालप्रतिभासतुल्याः ॥ ४६ ॥

यदाव[13]बुद्धा निरवग्रहेण
चित्तेन सद्भिर्विपुलाशयैस्तु ।
तदाभिभूताः सहजावगत्या
न बा[14]धनाजालमलीभवन्ति ॥ ४७ ॥

---

[1] A ०कारेया ।
[2] EC ह्वन्ति ।
[3] EC समुप० ।
[4] A च ।
[5] A ०मन ।
[6] ECB ०त् को हि ।
[7] DN ०म० ।
[8] ACE छेत्तुं ।
[9] EC ०बु०, A ०बं० B बुधः ।
[10] EC जन्मनि ।
[11] EC न्ताः ।
[12] D ०ह० ।
[13] A यथा हि ।
[14] A बो० ।

लाभालाभे च येषा[1]मयशसि यशसि[2] स्फारिदुःखे सुखे च[3]
निन्दायां संस्तुतौ च[4] हृतसकलमलं तुल्यमेव स्वचेतः।
मुक्तैः सर्वैर्विकल्पैर्जगति सकरुणं चर्ययाने च सक्तं
युक्तं तेषां करस्थं सुगतपदमिति प्रोक्त[5]वान् वज्रसत्त्वः॥ ४८॥

दुर्जनकुटिलोत्कटकोटरनिर्यातदुर्वचोभुजङ्गम्।
को न बिभेति परा[6]हितकारितमतिघोरकर्माण[7]म्॥ ४९॥

मनोहरं भूरिसुभाषितामृतं
असज्जनानां मनसे न रोचते।
सुनिर्मलानन्दिगभस्तिमालिकाः
सरोरुहं नोत्सहते हिमार्चिषः॥ ५०॥

तदेव सन्तः सुजनस्य मानसं
रसार्द्रमस्रान्वितमीक्षणं च।
करोति चन्द्रांशुवितानसङ्गमात्
क्षरत्यतीवामृतमिन्दुकान्तिः॥ ५१॥

अतोऽहमार्याः क्षतसम्पुटाञ्जलिः
विचक्षणाः सज्जनधर्म[मा][8]स्थिताः।
समर्पयामि प्रवरं भवत्स्विदं[9]
समासतो यद् रचितं[10] मया स्फुटम्॥ ५२॥

---

[1] DN मया। [2] EC omit.
[3] DN ०न। [4] A वा।
[5] BCE प्राह०। [6] ABCDE ०र०।
[7] ECB ०मंशा०। [8] MSS ०ता०।
[9] EC भवदक्षिद ; DN ०च्छिदं। [10] EC दुरितं।

श्रीवज्रसत्त्वेन यथोक्तमेव[1]
तथैव निर्दिष्टमिदं मयाऽपि ।
अथास्ति वैगुण्यमुदाहृतस्य
क्षन्तव्यमार्यैस्तदपीति याचे ॥ ५३ ॥

गुरुचरणाम्बुजसेवाविठयित[2]ममृतं शुभाकराख्येन ।
यन्मे तदखिलजगतां विहितं[3] साधनं[4] कृपया ॥ ५४ ॥

श्रीमत्त्रैलोक्यराज्ञः प्रवर[5]गुणनिधेर्देवदैत्येन्द्रमौलेः
कृत्वा तत्त्वानुविद्धं द्रुततरफलदं साधनं[6] यन्मयाऽत्र ।
प्राप्तं पुण्यं विशालं विमलगुणनिधे[7]र्हेतुभूतं सुयुक्तं
जित्वा कल्यारिचक्रं भवतु जगदिदं बोधिचित्तेन[8] तेन॥
५५ ॥

इति प्रज्ञोपायविनिश्चयसिद्धौ तत्त्वचर्यानिर्देशो
नाम पञ्चमः परिच्छेदः ।

कृतिरियमनङ्गवज्रपादानाम्[9] ।

॥ समाप्तोऽयं ग्रन्थः ॥

---

[1] BCDEN यथोदित च ।
[2] C •यदमय•(?) ।
[3] B विहिता जगता ।
[4] AEC साधारण ।
[5] EC •ना• ।
[6] DN •क ।
[7] A •धिया ।
[8] BCDE •पितन्तु ।
[9] DN omit the colophon.

श्रीमदिन्द्रभूतिविरचिता

# ज्ञानसिद्धिः ।

## प्रथमः परिच्छेदः ।

नमो वज्रसत्त्वाय ।

प्रणिपत्य जगन्नाथं सर्वजिनवरार्चितम् ।
सर्वबुद्धमयं सिद्धिव्यापिनं गगनोपमम् ॥ १ ॥
सर्वदं सर्वसत्त्वेभ्यः सर्वज्ञं वरवज्रिणम् ।
भक्त्याऽहं सर्वभावेन वक्ष्ये तत्साधनं परम् ॥ २ ॥
अशेषयोगतन्त्रोक्तं वज्रयानमनुत्तरम् ।
ये न जानन्ति मूढास्ते भ्रमन्तीह भवार्णवे ॥ ३ ॥
ये तु सत्त्वाः समारूढाः सर्वसङ्कल्पवर्जिताः ।
ते स्पृशन्ति परां बोधिं जन्मनीहैव साधकाः ॥ ४ ॥
मुद्रामण्डलमन्त्राद्यैर्जापभावनतत्परैः ।
नैव सिद्धिं परां यान्ति कल्पासङ्ख्येयकोटिभिः ॥ ५ ॥
रूपयौवनसम्पत्तेर्भोगैश्वर्यबलस्य च ।
जन्मगोत्रप्रवृत्तस्य न चित्ते मानमुद्वहेत् ॥ ६ ॥

---

[1] N स्वा० ।

[2] B ०योग० ।

[3] MSS ०साम्पत्य० ।

मतिमान् पण्डितोऽस्मीति सर्वशिल्पकलासु च ।
कुशलः पार्थिवश्चाहमिति चित्ते न योजयेत् ॥ ७ ॥
शीलवान् श्रुतवान् वीरो [रूपा][1]द्यैरपि संयुतः ।
[स्वमुक्तः][2] परमुक्तश्च नात्मानमुपलभ्यते ॥ ८ ॥
सर्वसत्त्वमनोव्यापी वज्रसत्त्वः स्वयं स्थितः ।
इति सञ्चिन्त्य योगात्मा न कञ्चिदवकल्पयेत् ॥ ९ ॥
बाला मूर्खा दरिद्राश्च दुःशीला रोगपीडिताः ।
एवमाद्यैरनेकैश्च संयुक्तान् नावमानयेत् ॥ १० ॥
भक्तो रत्नत्रये श्राद्धो बोधिचित्तविभूषितः ।
सर्वसत्त्वानुकम्पी च समयी संवरे स्थितः ॥ ११ ॥
शुष्क[3]लोहितमांसं च बोधिचित्त[4]विमिश्रितम् ।
मद्योदकसमायुक्तं भक्षयेत् तत्त्ववित् सदा ॥ १२ ॥
नरश्व[5]हयगोदीपं करिणां गर्दभस्य च ।
भक्षयेत् तत्त्वसिद्ध्यर्थं सर्वसङ्कल्पवर्जितम् ॥ १३ ॥
घातयेत् त्रिभवो[त्पत्तिं][6] परवित्ता[7]नि हारयेत् ।
कामयेत् परदारान्वै मृषावादमुदीरयेत् ॥ १४ ॥
कर्मणा येन वै सत्त्वाः कल्पकोटिशतान्यपि ।
पच्यन्ते नरके घोरे तेन योगी विमुच्यते ॥ १५ ॥
महोपायसमायुक्तो योगी लोकार्थकारकः ।
[नाकार्य][8] विद्यते तस्य सर्वसत्त्वजुगुप्सितम् ॥ १६ ॥

---

[1] MSS रोना॰ ? ।
[2] MSS उक्तारन् ।
[3] H मत्का॰ ।
[4] N ॰त्ते ।
[5] H ॰श्च, B ॰स्व ।
[6] MSS omit.
[7] MSS ॰न्याप॰ ।
[8] MSS नाकारक ।

प्रज्ञोपायसमायोगात् नास्ति पापं प्रकीर्त्तितम् ।
इत्युवाच स्वयं वज्री वज्रसत्त्वविकुर्वितः ॥ १७ ॥
भक्ष्याभक्ष्यविनिर्मुक्तः पेयापेय[1]विवर्जितः ।
गम्यागम्यविनिर्मुक्तो भवेद् योगी समाहितः ॥ १८ ॥
प्रतीत्योत्पन्नसद्भावान् सर्वभावान् विचारयेत् ।
गतागतिविनिर्मुक्तो[ऽनुपपन्नान्][2] निरात्मकान् ॥ १९ ॥
मायोपमादिदृष्टान्तैर्योज्यते प्रतिजानता ।
अहं मम विकल्पं च न कुर्याद् योगतत्त्ववित् ॥ २० ॥
सर्वव्यापी महावज्रः सर्वाकाशप्रतिष्ठितः ।
सर्वसत्त्वमनोव्यापी सर्वपुण्यमहोदयः ॥ २१ ॥
अन्योन्यव्यापको वज्रः सर्ववित् लोकनायकः ।
एष वज्रधरो राजा सर्वमन्त्रेषु वर्णितः ॥ २२ ॥
गुरुप्रसादो यस्यास्ति [3]स लभेत् तत्त्वमुत्तमम् ।
अन्यथा क्लिश्यते बालः चिरकालविमोहितः ॥ २३ ॥
गुरुर्बु[4]द्धो भवेद् धर्मः सङ्घश्चापि स एव हि ।
प्रसादाद् ज्ञायते तस्य यस्य रत्नत्रयं वरम् ॥ २४ ॥
अज्ञानतिमिरान्धानामेष मार्गप्रदर्शकः ।
स भवेत् सर्वसौख्याग्र्यः सर्वकामप्रदायकः ॥ २५ ॥
धर्मगम्भीरनिष्ठात्मा विविक्तकरुणात्मकः ।
रत्नत्रयप्रतिष्ठार्थी[5] धर्मदाने निरामिषः ॥ २६ ॥

[1] HB पापापाप० ।
[2] MSS नानुत्पन्नान् ।
[3] B लभते ।
[4] MSS ०धु० ।
[5] MSS ०र्था ।

मतिमान् पण्डितोऽस्मीति सर्वशिल्पकलासु च ।
कुशलः पार्थिवश्चाहमिति चित्ते न योजयेत् ॥ ७ ॥
शीलवान् श्रुतवान् वीरो [रूपा][1]द्यैरपि संयुतः ।
[स्वमुक्तेः][2] परमुक्तेश्च नात्मानमुपलभ्यते ॥ ८ ॥
सर्वसत्त्वमनोव्यापी वज्रसत्त्वः स्वयं स्थितः ।
इति सञ्चिन्त्य योगात्मा न कञ्चिदवकल्पयेत् ॥ ९ ॥
बाला मूर्खा दरिद्राश्च दुःशीला रोगपीडिताः ।
एवमाद्यैरनेकैश्च संयुक्तान् नावमानयेत् ॥ १० ॥
भक्तो रत्नत्रये श्राद्धो बोधिचित्तविभूषितः ।
सर्वसत्त्वानुकम्पी च समयी संवरे स्थितः ॥ ११ ॥
शुक्र[3]लोहितमांसं च बोधिचित्त[4]विमिश्रितम् ।
महोदकसमायुक्तं भक्षयेत् तत्त्ववित् सदा ॥ १२ ॥
नरस्य[5]हयगोदीपं करिणां गर्दभस्य च ।
भक्षयेत् तत्त्वसिद्ध्यर्थं सर्वसङ्कल्पवर्जितम् ॥ १३ ॥
घातयेत् त्रिभवो[त्पत्तिं][6] परवित्ता[7]नि हारयेत् ।
कामयेत् परदारान्वै मृषावादमुदीरयेत् ॥ १४ ॥
कर्मणा येन वै सत्त्वाः कल्पकोटिशतान्यपि ।
पच्यन्ते नरके घोरे तेन योगी विमुच्यते ॥ १५ ॥
महोपायसमायुक्तो योगी लोकार्थकारकः ।
[नाकार्य][8] विद्यते तस्य सर्वसत्त्वजुगुप्सितम् ॥ १६ ॥

---

[1] MSS रोना० ? ।
[2] MSS उक्तरन् ।
[3] H सक्र० ।
[4] N ०त्ते ।
[5] H ०स्य, B ०स्व ।
[6] MSS omit.
[7] MSS ०न्यप० ।
[8] MSS नाकारक ।

प्रज्ञोपायसमायोगात् नास्ति पापं प्रकीर्त्तितम्[1] ।
इत्युवाच स्वयं वज्री वज्रसत्त्वविकुर्वितः ॥ १७ ॥

भक्ष्याभक्ष्यविनिर्मुक्तः पेयापेयविवर्जितः ।
गम्यागम्यविनिर्मुक्तो भवेद् योगी समाहितः ॥ १८ ॥

प्रतीत्योत्पन्नसद्भावान् सर्वभावान् विचारयेत् ।
गतागतिविनिर्मुक्तो[ऽनुपपन्नान्][2] निरात्मकान् ॥ १९ ॥

मायोपमादिदृष्टान्तैर्योज्यते प्रतिजानता ।
अहं मम विकल्पं च न कुर्याद् योगतत्त्ववित् ॥ २० ॥

सर्वव्यापी महावज्रः सर्वाकाशप्रतिष्ठितः ।
सर्वसत्त्वमनोव्यापी सर्वपुण्यमहोदयः ॥ २१ ॥

अन्योन्यव्यापको वज्रः सर्ववित् लोकनायकः ।
एष वज्रधरो राजा सर्वमन्त्रेषु वर्णितः ॥ २२ ॥

गुरुप्रसादो यस्यास्ति [3]स लभेत् तत्त्वमुत्तमम् ।
अन्यथा क्लिश्यते बालः चिरकालविमोहितः ॥ २३ ॥

गुरुर्बु[4]द्धो भवेद् धर्मः सङ्घश्चापि स एव हि ।
प्रसादाद् ज्ञायते तस्य यस्य रत्नत्रयं वरम् ॥ २४ ॥

अज्ञानतिमिरान्धानामेष मार्गप्रदर्शकः ।
स भवेत् सर्वसौख्याग्र्यः सर्वकामप्रदायकः ॥ २५ ॥

धर्मगम्भीरनिष्ठात्मा विविक्तकरुणात्मकः ।
रत्नत्रयप्रतिष्ठार्थी[5] धर्मदाने निरामिषः ॥ २६ ॥

---

[1] HB पापापाप० ।
[2] MSS नानुत्पन्नान् ।
[3] B लभते ।
[4] MSS ०बु० ।
[5] MSS ०र्थी ।

स गुरुः शिष्यसन्नाही[1] सर्वबुद्धानुकारकः ।
इत्युवाच जगन्नाथो नान्ये वै[2] गुरवः स्मृताः ॥ २७ ॥
यस्मान्न तत्समो ह्यस्ति पूजनीयो महामुनिः ।
तस्मात् सर्वप्रयत्नेन पूजयेद् गुरुवरं व्रती ॥ २८ ॥
तत्समो विद्यते लोके मान्यो[3] न त्रिभवे जनः ।
वज्रसत्त्वः स्वयं लोके सर्वसम्पत्तये स्थितः ॥ २९ ॥
आराध्योऽनेकधा शिष्यैः[4] सत्सम्पदमभी[5]प्सुभिः ।
अक्षीण[6]पुण्यकामैश्च सर्वविघ्नविनायकैः ॥ ३० ॥
सर्वेषां समयानां हि समयोऽयं निरुत्तरः ।
रक्ष्योऽयं भवता[7] नित्यं सर्वस[म्पत्प्र]दायकः ॥ ३१ ॥
लब्धुं ज्ञानवरं दिव्यं सर्वसङ्कल्पवर्जितम् ।
वज्रज्ञानाभिषिक्तो हि[8] साधयेद् बोधिमुत्तमाम् ॥ ३२ ॥
सम्यग् ज्ञान[9]समायुक्तो[10] लेख्यम्एसयमण्डले[11] ।
गृह्णीयादभिषेकं चेत् समयाद् भ्रश्यते ह्यसौ ॥ ३३ ॥
समयभ्रं[शतो][12] दुःखं कायिकं मानसं तथा ।
अर्थनाशो[13] भवेत् तस्य मरणं शीघ्रमेव च ॥ ३४ ॥
मृते च नारकं दुःखं कल्पकोटिशतान्यपि ।
अनुभूय य[14]दोत्तिष्ठेत् चाण्डाले हीनजे कुले ॥ ३५ ॥

---

[1] MSS ०सद्या० ।
[2] H सद्यो०, B नान्यो० ।
[3] MSS ०ध्य ।
[4] HB सतसम्पदभि० ।
[5] BH ०क्षित्र. N ०क्षीश्र ।
[6] MSS रक्षियं नवता ।
[7] MSS ०सम्प० ।
[8] AN omit.
[9] HN ०ने ।
[10] NH ०क्ति B क्ते ।
[11] MSS लेख्य मिथ्या न मण्डल ।
[12] MSS ०शाद् भवेद् ।
[13] MSS ०श ।
[14] B ०दृपम० ।

उत्पद्यते स मूढात्मा मूको वा विकलोऽथवा ।
जात्यन्धो हि भवेद् जातो जातौ जातौ न संशयः ॥ ३६ ॥
सर्वताथागतं ज्ञानं वज्रयानमिति स्मृतम् ।
तेनाभिषिक्तो मतिमान् अभिषिक्तोऽभिधीयते ॥ ३७ ॥
स योगी सर्वबुद्धात्मा सर्वदेवान्तिके गणैः ।
कृताञ्जलिपुटैर्भू[2]त्वा अभिवन्द्यो[3] जगत्पतिः ॥ ३८ ॥
[कुर्वन्ति रक्षणं][4] वीरा बोधिसत्त्वा महाबलाः ।
बुद्धाश्चापि महात्मानो वज्रकायाः सदा स्थिताः ॥ ३९ ॥
मत्य[5]धर्मपरो ह्येष बुद्धवर्त्म[6]प्रवर्त्तकः ।
सगौरवाः प्रशंसन्ति अधिष्ठानसमन्विताः ॥ ४० ॥
लोकपालास्तथा चान्ये महाबलपराक्रमाः ।
सर्वस्थानगतस्यापि रक्षमाणाः प्रतिष्ठिताः ॥ ४१ ॥
ये चापि सर्वलोकेषु मारविघ्नाः प्रतिष्ठिताः ।
तेऽपि तस्य न कुर्वन्ति विघ्नं[7] भीताः प्रयान्ति च ॥ ४२ ॥
सर्वदेवादयः सिद्धाः सर्वाकाशचराचराः ।
न लङ्घयन्ति च तं तेऽप्यपायगतिभीरवः ॥ ४३ ॥
वीर्यस्य[8] ज्ञानविज्ञानसिद्धेर्हा[9]निर्भवत्यपि ।
यदि मोहवशादेव लङ्घयन्ति विमोहिताः ॥ ४४ ॥
सर्वज्ञो वरदो वादी वर्णसंस्थानकं विना ।
गतागतिविनिर्मुक्तो अचाल्यः सर्ववायुभिः ॥ ४५ ॥

---

[1] MSS वलको० ।
[2] MSS ०टो भू० ।
[3] B अविवन्धा ।
[4] MSS omit.
[5] B रूप० ।
[6] HN ०धर्म० ।
[7] MSS ०घ्न० ।
[8] MSS ०र्य च ।
[9] MSS ०द्धिहा० ।

दह्यते नाग्निस्कन्धेन ल्राव्यते न जलेन च ।
भिद्यते नहि शस्त्रेण तीक्ष्णेनापि प्रयत्नतः ॥ ४६ ॥
अप्रतिष्ठं यथाकाशं व्यापि लक्षणवर्जितम् ।
इदं तत् परमं तत्त्वं वज्रज्ञानमनुत्तरम् ॥ ४७ ॥
ख्याता समन्तभद्रेति महामुद्रा च संज्ञिता ।
धर्मकायमिदं ज्ञेयमादर्शज्ञानमित्यपि ॥ ४८ ॥
प्रतिबिम्बं यथादर्शे स्वकीयं दृश्यते ध्रुवम् ।
धर्मकायस्तथा ज्ञाने दृश्येतादर्शसंस्थिते ॥ ४९ ॥
सर्वतायागतं ज्ञानमात्मनः प्राणिनामपि ।
एकस्वभावसम्बोधौ समताज्ञानमुच्यते ॥ ५० ॥
आदिशुद्धमनुत्पन्नं प्रकृत्यैव प्रभास्वरम् ।
अन्योन्यव्यापकज्ञानात् प्रत्यवेक्षणकं स्मृतम् ॥ ५१ ॥
सर्वत्र सर्वदा सर्वं बुद्धकृत्यप्रवर्त्तनम् ।
सर्वबुद्धैककार्यत्वात् कृत्यानुष्ठानमुच्यते ॥ ५२ ॥
क्लेशज्ञेयावृतं सर्वं यदा मुक्तं भवेत् तदा ।
सुविशुद्धमिति ख्यातं वज्रिणां वरयोगिनाम् ॥ ५३ ॥
तथा वैनेयधर्मेषु सर्वकामगुणेषु च ।
सर्वबुद्धैकसम्भोगात् कायः साम्भोगिको मतः ॥ ५४ ॥
सर्वलक्षणसंयुक्तो नानाकायो ह्यलक्षणः ।
निर्मितत्वात् च बुद्धानां कायो नैर्माणिको मतः ॥ ५५ ॥

---

[1] H °र्शन° ।
[2] NB °त्माय ।
[3] MSS °क ।
[4] MSS °तैव ।
[5] N य° ।
[6] MSS °ग° ।
[7] B °ग्र° ।

ज्ञात्वा तद्भावतो योगी महामुद्राप्रसिद्धये।
सिध्यते जन्मनीहैव सर्वसङ्कल्प[1]वर्जितः॥ ५६॥
महामुद्रेति विज्ञेया सर्वबुद्धमया शिवा।
सिद्धा साऽनेकतन्त्रेषु देशिता वरयोगिना॥ ५७॥
गर्भ[2]चक्रं मा[3]नयेत् च क्षेत्रे क्षेत्रे प्रतिक्षणम्।
सर्वताथागतं सम्यक् तत्र सन्धारयेद् व्रती॥ ५८॥
कुमारक्रीडनं सर्वं शिल्पसन्दर्शनं तथा।
अन्तःपुरात् निष्क्रमणं मारधर्षणमेव च॥ ५९॥
देवावतारणं[4] चैव धर्मचक्रप्रवर्तनम्।
महानिर्वाणं [सन्दृश्यं य][5]चान्यत् सर्वक्रीडनम्॥ ६०॥
सर्ववज्रमयं सर्वं योगी नित्यं प्रभावयेत्।
नापूर्वं दृश्यते च्च[स्य][6] नायोज्यं पूर्वसंस्थितम्॥ ६१॥
सर्वताथागतं शत्यं सर्ववज्रमयं शिवम्।
त्रैकाल्यं-यत्तु[7] पर्यन्तं सर्वमेवावलोकयेत्॥ ६२॥
सर्ववाग्विषयातीतं सर्वलक्षणवर्जितम्।
ईदृशं चिन्तयेद् योगी [[8]सर्वबुद्धत्वदायकम्॥ ६३॥
सर्वभूमिविनिर्मुक्तं कार्यकारणवर्जितम्।
सिद्धं विभावयन् योगी] जन्मनीहैव सिद्ध्यति॥ ६४॥
सर्वोपायविधिज्ञस्य योगिनः सर्ववज्रिणः।
सिध्यतेऽनुत्तरं तत्त्वं वज्रसत्त्ववरो यथा॥ ६५॥

---

[1] BN ०कल्पवि०। [2] B ०र्भे। [3] MSS ०क्रमा०।
[4] MSS ०णां। [5] MSS सन्दर्शये०।
[6] MSS *omit*. [7] MSS ०तु।
[8] H omits the bracketted portion.

स्थितः सुप्तो निषण्णश्च चंक्रमेदथवापि च ।
भाषणे वज्रवाक्ये च वज्रसत्त्वत्वमावहेत् ॥ ६६ ॥
रूपशब्दरसस्पर्शानुपभुज्य[1] सदा व्रती ।
पूजां तु सर्वबुद्धानां करोमीति समारभेत् ॥ ६७ ॥
सत्त्वेभ्योऽपि त[2]दा दद्याद् भक्तवस्त्रादिकं तथा ।
अन्यद् वापि च यत् किञ्चित् तथैव विधिमाचरेत् ॥ ६८ ॥
नृत्यगीतैस्तथा वाद्यैः पुष्पमाल्यादिभूषणैः ।
स्रग्दामचामरैः छत्रैः परात्मानं प्रपूजयेत् ॥ ६९ ॥
सुगन्धि[3]गन्धलेपाद्यैरपि लिप्तं यथाविधि ।
आत्मानं पूजयेद् योगी सर्वबुद्धमनुस्मरन् ॥ ७० ॥
व्रती वा मुण्डितो वाऽथ गृही वा सेवकोऽथ वा ।
राजा वा सेवकाध्यक्षो यथाऽसौ रोचयेद् व्रती ॥ ७१ ॥
तथासौ कुरुते योगी सर्वथा न प्रदुष्यति ।
सर्वकल्पविनिर्मुक्तो यथाकामक्रियाकरः ॥ ७२ ॥
सर्वभावस्वभावोऽसौ सर्वबुद्धमयो विभुः ।
स्वयम्भूः[4] कामचारी च सर्वसत्त्वहृदि स्थितः ॥ ७३ ॥
भावयेत् तत्त्वयोगी स सर्वतत्त्वमनुस्मरन् ।
सर्ववज्रमयं सिद्धं लघु वज्रत्वमाप्नुयात् ॥ ७४ ॥
नाच विघ्ना न माराश्च सर्वे वश्या भवन्ति च ।
सर्वदुःखविनिर्मुक्तमात्मानं साधयेद् व्रती ॥ ७५ ॥

---

[1] H ॰ज्ञेत्, N ॰जयेत् ।
[2] MSS य॰ ।
[3] N ॰ला॰ ।
[4] BH ॰न्या॰ ।
[5] H ॰न्तु ।

सिध्यते सर्वबुद्धत्वं दिने विधिविवर्जितम् ।
आत्मानं सर्वसंयुक्तं सदा पश्यन् महाव्रती ॥ ७६ ॥
सर्वपूजाविशेषैश्च आत्मानं पूजयेत् सदा ।
अन्येभ्योऽपि तथा देयं वज्रसत्त्वमनुस्मरन् ॥ ७७ ॥
सर्वसत्त्वान्नसम्भूतान् प्राणिनो[1]ऽपि [विड्][2]द्भवान् ।
संगृह्य च महायोगी भक्षयेत् तत्त्वसिद्धये ॥ ७८ ॥
महाप्रदीपसंयुक्तैः समयेऽन्यै[3]र्जुगुप्सितैः ।
पञ्चामृतं सदा भक्ष्यं पूज्यार्थैव तथागताः ॥ ७९ ॥
सर्वाङ्गकुत्सितायां वा न कुर्यादवमाननाम् ।
स्त्रियं सर्वकुलोत्पन्नां पूजयेद् वज्रधारिणी[4]म् ॥ ८० ॥
अजातपुष्पसंयुक्तां बोधिचित्तसमन्विताम् ।
[सेव][5]येत् तत्त्वसिद्ध्यर्थं निर्विकल्पविधिस्थितः ॥ ८१ ॥
चण्डालकुलसम्भूतां डोम्बिकां वा विशेषतः ।
जुगुप्सितकुलोत्पन्नां[6] सेवयन् सिद्धिमाप्नुयात् ॥ ८२ ॥
द्विजातिकुलसम्भूताः कन्याः काम्यास्तु योगिनः[7] ।
यथा चित्तं न प्रदुष्येत् तथा कार्यं सुशोभनम् ॥ ८३ ॥
मञ्चकैः छदि (!) सम्मिश्रैः पुरीपादिविमिश्रितैः ।
पूजयेद् वज्रसत्त्वात्मा निर्विकल्पेन चेतसा ॥ ८४ ॥
यथाकामक्रियाकारी यथार्ह[8]चितचेष्टितः ।
साधयेद् वज्रसत्त्वत्वमन्यथा क्लिश्यते ध्रुवम् ॥ ८५ ॥

[1] B ०ना ।
[2] BH ०प्रज्ञ०, N ०ग्नूर० ।
[3] MSS ०यैर० ।
[4] HB ०णी० ।
[5] MSS भक्ष० ।
[6] HB ना ।
[7] H पक्ष० ।
[8] H ०नु० ।

व्रतोपवास[1]नियमै[2]र्देवतारूपभावनैः ।
नानाभुजसमायुक्तैः सिध्यते नहि साधनैः[3] ॥ ८६ ॥
जम्बूद्वीपरजःकल्पमन्त्रजापविभावनैः ।
सिध्यते नहि बुद्धत्वं महावीर्यवतामपि ॥ ८७ ॥
एवमाद्यैरनेकैश्च शिशुभिः कल्पितैर्नयैः ।
दुर्लभं सुगतौ जन्म वज्रसत्त्वं कथं भवेत् ॥ ८८ ॥
महा[4]मण्डलमुद्रादीन् जगाद भगवान् मुनिः ।
सम्यग्ज्ञानसमायोगभव्यताविगतात्मनाम् ॥ ८९ ॥
स्वसं[5]वेद्यस्वभावं यत् तत्त्वरत्नमनुत्तरम् ।
युक्त्यागमविचारैस्तु ग्रहीतुं ये तु न क्षमाः ॥ ९० ॥
अज्ञानमोहसंच्छन्ना अपरोक्षकबुद्धयः ।
आदिकर्मिकथा[ह्या]स्ते हीनधर्मस्य भाजनाः ॥ ९१ ॥
तान् प्रत्युक्ता[6] जगन्नाथैः वज्रसत्त्वविभावनैः ।
भुजवर्णसमायुक्तमुद्रामण्डलकैस्तथा ॥ ९२ ॥
अपरप्रत्युपायैर्ये गम्भीरज्ञानभाजनाः ।
अकम्प्याः पापमित्रैश्च मारविघ्नविनायकाः ॥ ९३ ॥
तेषां तत्त्वमिदं शुद्धं सर्वकल्पविवर्जितम् ।
अगम्यं सर्वसत्त्वानां ब्रह्मादीनां च सर्वथा ॥ ९४ ॥
देशितं लोकनाथैस्तु ज्ञानम[त्य]द्भुतं परम् ।
सिद्धिदं जन्मनीहैव सर्वबुद्धमयं शिवम् ॥ ९५ ॥

इति ज्ञानसिद्धौ तत्त्वनिर्देशः प्रथमः परिच्छेदः ।

---

[1] MSS ॰सो ।  [2] MSS ॰मो ।  [3] MSS नं ।  [4] B मुद्रा॰ ।
[5] HB ॰य॰ ।  [6] MSS ॰युक्तान् ।

# द्वितीयः परिच्छेदः।

पञ्चबुद्धस्वभावत्वात् पञ्चस्कन्धा जिनाः स्मृताः।
धातवो लोचनाद्यास्तु बुद्धकायस्त[1]तो मतः॥ १॥
एवं चेत् प्राणिनः सर्वे सम्बुद्धास्त्रिभवे सदा।
बुद्धत्वाय क्रियाः सर्वा वृथैव श्रुतभावनाः॥ २॥
बुद्धत्वात् सर्वलोकस्य सर्वे[2]ऽपि त्रिभवेन तु।
सुखदुःखपिपासादिबाधा तस्य न युज्यते॥ ३॥
षडभिज्ञा[3]दयश्चापि बोधौ गुणविभूतयः।
कथं ते न प्रवर्त्तन्ते बुद्धकायो भवेद् यदि॥ ४॥
यस्त्वेवं न प्रजानाति स सम्बुद्धो भवेत् कथम्।
एवं जानाति चेत् कश्चिदसौ बुद्धो भविष्यति॥ ५॥
क्रमादभ्यासयोगेन यस्य चिन्ता प्रवर्त्तते।
बुद्धो भवेदसौ योगी नान्ये बुद्धत्वसाधकाः॥ ६॥
स्वभावाद् यदि ते बुद्धा नाभ्यासेन प्रयोजनम्।
स[4]युक्तिकसदाभ्यासं युक्तितो[5]ऽयुक्तिवर्जितम्॥ ७॥
यद्यनाथो जनः कश्चित् राजाऽहमिति भावयेत्।
कल्पकोटिशतेनापि नासौ राज्यमवाप्नुयात्॥ ८॥
मिथ्याकल्पनया यस्माद् राज्यं तस्य न विद्यते।
मिथ्याभावनया तस्माद् बुद्धत्वं न भविष्यति॥ ९॥

---

[1] MSS ०य त।
[2] BH सर्वोत्पत्ति०
[3] BN षडभिज्ञाना०।
[4] B स०।
[5] N omits

तन्त्रराजेषु संबद्धैः स्कन्धाद्यायतनादिषु ।
तत्त्वं नामभिरुद्दिष्टं संयुक्तं सम[1]भाषया ॥ १० ॥
[शुक्रं][2] वैरोचनं[3] ख्यातं वज्रोदकं तथाऽपरम्[4] ।
स्त्रीन्द्रियं च यथा पद्मं वज्रं पुंसेन्द्रियं तथा ॥ ११ ॥
स्वभावाद् देवताकार्यं[5] तस्माद् वक्तुं न युज्यते ।
युक्त्यागमानुसारेण यस्माद् वक्तुं न शक्यते ॥ १२ ॥
कृतकं देवतारूपं वज्रसत्त्वो भवेद् यदि ।
संस्कृतो जायते तस्मात् नश्यते तु घटादिवत् ॥ १३ ॥
ततो निष्फलतां यायात्[6] बोधिचर्या त्वनेकधा ।
भावनाऽपि किमर्थं स्याद् यदि भूत्वा विनश्यति ॥ १४ ॥
मनोमयकृतं रूपं कथं संस्कृतमुच्यते ।
कथं विनश्यति चैतत् शृणु मो हार्णवाधुना ॥ १५ ॥
चित्तस्य कल्पना ज्ञेया सापि संस्कृतलक्षणा ।
मनसा कल्पितं यत् तदविनाशि कथं भवेत् ॥ १६ ॥
भुजवर्णसमायुक्तं यथापूर्वव्यवस्थितम् ।
अकृतं देवतारूपं भाव्यते तन्मयाऽधुना ॥ १७ ॥
अकृतं देवतारूपं भाव्यते तत् त्वया यदि[8] ।
स्थितं पूर्वमनुत्पन्नं भाव्यते किं प्रयोजनम् ॥ १८ ॥
भवेयं तादृशं रूपं मत्वा[9]हमिति भावना ।
भावने द्वे विचार्येऽत्र योगिना रूपसाधने ॥ १९ ॥

---

[1] N भमया॰ ।
[2] HB सक्षद्॰, N मक्षद्॰ ।
[3] HB ॰रो ।
[4] H omits.
[5] HB ॰कार्यं ।
[6] B ॰ताया या ।
[7] H म॰ ।
[8] Twice in N.
[9] MSS तत्त्वा॰ ।

ताद्दशोऽहं भवेयमिति यदि ध्यानं प्रकल्प्यते ।
यदा ध्यानं स्फुटीभूतं द्दश्यते देवता तु सा ॥ २० ॥
[1]पटादौ रूपमालोक्य यदा ध्यानं [प्रकल्प्यते ।
तदा]..................जातस्य ते बुधाः[2] (!) ॥ २१ ॥
अजातं देवतारूपं ध्याने तत्र गतं यदि ।
सर्वाभिज्ञाप्रवृत्तेस्तु [त]द् रूपं चैव तत्क्षणात् ॥ २२ ॥
एवं चेत् नास्ति ते सम्यक् तद् ध्यानेनागतं भवेत् ।
त्वया निष्पादितं रूपं कृतकं किं न बुध्यसे ॥ २३ ॥
अहं तदिति पक्षे तु द्वयं तत्र न विद्यते ।
सिद्धस्य साधनं नास्ति कथं ध्यानप्रकल्पना ॥ २४ ॥
सर्वज्ञत्वं हि सर्वज्ञो न भूयः प्राप्तुमिच्छति ।
बुद्धकृत्यं त्वया कार्यं बुद्धत्वं नान्यकारिता ॥ २५ ॥
एवं ते नास्ति सम्यक्त्वं कथं मिथ्या प्रकल्प्यते ।
अकृतं बुद्धकृत्यं यत् तदेवाहस्मतिर्यथा ॥ २६ ॥
अकृतं देवतारूपं तदिदानीं विचार्यते ।
अकृतं[3] शक्यते वर्त्तु[4] रूपित्वान्न[5] घटादिवत् ॥ २७ ॥
अत एव जगन्नाथा बालानां प्रतिबोधने ।
निर्वाणं दर्शयन्त्येव रूपस्यानित्यदर्शकाः ॥ २८ ॥
तस्मात् स्वरूपवान् बुद्धः[6] क्वचित् लोके प्रवर्त्तते ।
बुद्धरूपप्रसिद्ध्यर्थं न कार्या रूपभावना ॥ २९ ॥

---

[1] H omits three lines
[2] Incomplete in MSS
[3] HB °ते ।
[4] HB °सत्र ।
[5] MSS च ।
[6] MSS बन्धु ।

कायस्थं चेद् भवेद् ज्ञानं कायाभावे न सर्ववित् ।
प्रतीत्यसम्भवं ज्ञानमतो नाश्नमवाप्नुयात् ॥ ४० ॥

विनाशिज्ञानकायानां सर्वज्ञत्वं न युज्यते ।
अतोऽपि बुद्धकायो हि सर्वज्ञो न विधीयते ॥ ४१ ॥

ज्ञानादन्यत्वपक्षे तु बुद्धकायः कथं भवेत् ।
बुद्धस्य प्रतिमेत्येवं वक्तुं युक्तं हि योगिना ॥ ४२ ॥

तस्मात् मूढतरो लोको यो रूपं ध्यातुमिच्छति ।
बुद्धज्ञानप्रसिद्ध्यर्थमाकाशे भोक्तुमिच्छति ॥ ४३ ॥

सत्त्वेषु करुणाहीनाः श्रद्धाप्रज्ञाविवर्जिताः ।
गम्भीरोदारधर्मेषु बुद्धिस्तेषां भवेन्नहि ॥ ४४ ॥

एतेषां धर्महीनानामितश्चेतश्च धावताम् ।
उन्मत्तवत् प्रयातेषु [यु]गपद्[2] धर्ममोहिताम् ॥ ४५ ॥

करुणा महती कार्या सत्त्वेभ्योऽपि विशिष्टता ।
नापमानमतो युक्तं सम्यग्ज्ञानोपदेशकैः ॥ ४६ ॥

ज्ञानसिद्धौ रूपभावनानिषेधो द्वितीयः परिच्छेदः ।

---

[1] HN ०ज्ञान० ।

[2] MSS add ता ।

चक्षुर्विज्ञान[मार्ग][1] यत् तद् ज्ञानेन विकल्प्यते ।
विकारित्वं प्रसज्येत बुद्धज्ञानस्य नान्यथा ॥ १० ॥
अविकारं तु तद् ज्ञानं सर्वबुद्धैः प्रदर्शितम् ।
तस्मान्न युज्यते वक्तुमेकत्वमिति निश्चयः ॥ ११ ॥
ज्ञानस्य प्रतिभासोऽयं न तद् ज्ञानं प्रकल्प्यते ।
प्रतिभासनिरोधेन ज्ञानं कस्मान्निरुध्यते ॥ १२ ॥
तस्मादसिद्धमेकत्वं त्वद्वाचै[2]व सुनिश्चितम् ।
एकत्वं तु किमर्थं हि परिकल्पयसे [वृथा][3] ॥ १३ ॥
युक्त्यागमवि[4]रुद्धत्वात् निष्फलत्वाच्च सर्वथा ।
ज्ञानं तदेव सा[5]कारमित्येवं नहि युज्यते ॥ १४ ॥
आकाराद् व्यतिरिक्ते तु ज्ञाने ज्ञानं न युज्यते ।
ज्ञेये सति भवेद् ज्ञानं न तु ज्ञेयें[6] तिरस्कृते[7] ॥ १५ ॥
आकारेभ्यः पृथग्भूतं ज्ञानं चेद् यदि कल्प्यते ।
आकाराश्च पृथग्भूता ज्ञानादेव निराश्रयात् ॥ १६ ॥
ज्ञानस्योत्पादकाले तु नाकारा[8]णां समुद्भवः ।
आकाराणां समुत्पादे ज्ञानं नैवोपपद्यते ॥ १७ ॥
यथा घटस्य निष्पत्तौ न पटस्योद्भवो भवेत् ।
पृथक्त्वादेव धर्माणामेवं[9] लोके प्रदृश्यते ॥ १८ ॥

---

[1] MSS ॰मागम्य ।
[2] MSS ॰चै ।
[3] H त्वया, NB तया ।
[4] MSS ॰नि॰ ।
[5] MSS तदेव चानसाय ।
[6] BN ॰य॰, H adds सति ।
[7] MSS ॰त ।
[8] HN ॰री॰ ।
[9] B ॰मल ।

न ह्यजातेन पुत्रेण पुत्री[1] भवितुमर्हति ।
एवं निराश्रये[2] ज्ञाने साकारं कथमिष्यते ॥ १९ ॥

किमपेक्ष्य भवेद् ज्ञानं साकारं येन तं[3]द्भवेत् ।
साकारज्ञानमित्येव आकाररहितं न तु ॥ २० ॥

आकाररहिते ज्ञाने साकारत्वं कथं भवेत् ।
आकारैः सहितं यत् तु तत् साकारं प्रकल्प्यते ॥ २१ ॥

सर्वाकारविनिर्मुक्तं बुद्धज्ञानं कथं भवेत् ॥
आकारेण विनाऽपीह साकारत्वं भवेद् यदि ।
बुद्धज्ञानं विना बुद्धः कथं तत्त्वं भविष्यति ॥ २२ ॥

न तद् ज्ञानं न सर्वज्ञः पृथग्ज्ञाने विकल्पते ।
अथ साकारता ज्ञाने सिद्धिं नैवोपपद्यते ॥ २३ ॥

आकारेण समायुक्तं साकारत्वं भवेद् यदि ।
'न संयोगतया दृष्टं बुद्धवत् संप्रवर्त्तके'[5] ॥ २४ ॥

रूपिणो नहि संयोगा अरूपेणैव सर्वथा ।
यथाकाशेन संयोगात् न [घटस्योद्भवो भवेत्][6] ॥ २५ ॥

आकारेण च युक्तं [हि] साकारत्वं भवेद् यदि ।
सापेक्षत्वाद् विनाशित्वं विपाामग्र्यं भविष्यति ॥ २६ ॥

प्रतीत्यसम्भवं यत् तद् बुद्धज्ञानं भवेन्नहि ।
सं[7]स्कृतत्वं यथा ज्ञाने साकारत्वं न सिध्यति ॥ २७ ॥

---

[1] MSS मपुत्रो ।
[2] B •मये, HN •श्रये ।
[3] B म० ।
[4] B repeats बुद्धज्ञान विना बुद्धः etc. instead of this line.
[5] N •ते ।
[6] MSS घटस्योस्यते यतः ? ।
[7] B स० ।

आकारज्ञानयोश्चैव अन्यत्वं तु तयोर्यदि ।
अन्योन्यकं मयोक्तं च कथं ज्ञानं भविष्यति ॥ २८ ॥
आकाराश्च पृथग्ज्ञानादित्येवं यदि कल्पते ।
ज्ञानादन्यतया[1] तेषामज्ञानत्वं प्रसज्यते ॥ २९ ॥
आकारेभ्यो यथाऽन्यत्तु निराकारमतो भवेत् ।
तथा[2] ज्ञानं निराकारं कथमेवं न कल्पते ॥ ३० ॥

ज्ञानसिद्धौ साकारनिराकरणस्तृतीयः परिच्छेदः ।

---

[1] MSS ०यो ।  [2] MSS ०दा ।

न ह्यजातेन पुत्रेण पुत्री भवितुमर्हति ।
एवं निराश्रये ज्ञाने साकारं कथमिष्यते ॥ १९ ॥
किमपेक्ष्य भवेद् ज्ञानं साकारं येन तं भवेत् ।
साकारज्ञानमित्येव आकाररहितं न तु ॥ २० ॥
आकाररहिते ज्ञाने साकारत्वं कथं भवेत् ।
आकारैः सहितं यत् तु तत् साकारं प्रकल्पते ॥ २१ ॥
सर्वाकारविनिर्मुक्तं बुद्धज्ञानं कथं भवेत् ॥
आकारेण विनाऽपीह साकारत्वं भवेद् यदि ।
बुद्धज्ञानं विना बुद्धः कथं तत्त्वं भविष्यति ॥ २२ ॥
न तद् ज्ञानं न सर्वज्ञः पृथग्ज्ञाने विकल्पते ।
अथ साकारता ज्ञाने सिद्धिं नैवोपपद्यते ॥ २३ ॥
आकारेण समायुक्तं साकारत्वं भवेद् यदि ।
'न संयोगतया दृष्टं बुद्धवत् संप्रवर्त्तके' ॥ २४ ॥
रूपिणो नहि संयोगा अरूपेणैव सर्वथा ।

दृष्टान्तैरेव ते तुल्या धर्माश्चेत् सर्वथा स्मृताः ।
भवेयुर्न च दृष्टान्ताः साध्यत्वात् सर्वयत्नतः ॥ १० ॥

पुरुषे सिंहदृष्टान्तो यथा लोके प्रवर्त्तते ।
शौर्यादिगुणसंयोगात् न तु पुच्छादिसम्भवैः ॥ ११ ॥

तस्मान्न सर्वथाऽभावाः सर्वभावाः स्वभावतः ।
युक्त्यागमानुसारेण बोद्धव्यं पुरुषोत्तमैः ॥ १२ ॥

तस्मात् त्वया यदुद्दिष्टं बालोल्लापनगामिना ।
न तद्भूतं वदन्त्येव जगदुद्धरणोद्यमाः ॥ १३ ॥

शशशृङ्गं यथाऽभावं वन्ध्यायाः पुत्रवत् तथा ।
न क्वचित् सर्वभावानामभावो देशितो जिनैः ॥ १४ ॥

यदि रूपादयो भावा विद्यन्ते नैव सर्वथा ।
दिव्यचक्षुः कथं सिद्धं बुद्धानां करुणात्मनाम् ॥ १५ ॥

दिव्यश्रोत्रादयः सर्वे न भवन्ति ततस्तथा ।
सर्वज्ञो हि ततो न स्यादभिज्ञानामभावतः ॥ १६ ॥

निराकारेण ज्ञानेन बुद्धकाये सुसंयुते ।
सर्वाभिज्ञाः प्रवर्त्तन्ते सर्ववित्त्वं कथं नहि ॥ १७ ॥

चक्षुरादिभिरेवैते रूपाद्यायतनादयः ।
अनुभाव्याः सचेतस्कैरेवं लोके प्रवर्त्तते ॥ १८ ॥

रूपादयो न सन्तीति त्वयैवोक्तं पुनः पुनः ।
अभावेन कथं योगो भवेदिति प्रकल्प्यते ॥ १९ ॥

---

[1] HB ०द्धु० ।
[2] MSS ०र० ।
[3] MSS ०ये० ।

यद्यभावेन योगः स्याद् युक्तं वक्तुं त्वयेदृशम् ।
अभावः सर्वथा येषां तद्योगः कथमिष्यते ॥ २० ॥
अयोगेऽपि भवेद् ज्ञानं प्रणिधानवशात् तथा ।
करोति सर्वसत्त्वार्थं यथा वैनेयभाजने ॥ २१ ॥
नासौ किञ्चिद् यदा वेत्ति सत्त्वार्थं कुरुते कथम् ।
नावेदको हि सर्वज्ञो न कृपा सत्त्वसङ्ग्रहे ॥ २२ ॥
प्रणिधानेन सत्त्वार्थः चिन्तामणिरिवापरः ।
करोतीति न तद्भक्त्या प्रतिभाति सतामिह ॥ २३ ॥
सर्वसत्त्वार्थसंसिद्धौ नियत[1]त्वं सदा यतः ।
चिन्तामणिरतः ख्यातं ज्ञानं तदज[2]डात्मकम् ॥ २४ ॥
अदृष्टेऽप्यकृतं यच[3] स्व[4]कीया ज्ञानकल्पना ।
सर्वज्ञोऽहं जगत्स्वाम्य[6]प्यभूवमिति किं नहि ॥ २५ ॥
बोधिचित्तं समुत्पाद्य सर्वसम्भारसंवृतः ।
महोत्साहो महावीर्यो भावनाचिन्तनादिभिः ॥ २६ ॥
सद्धर्मश्रवणाद्यैस्तु दुःखे नैव प्रयोजनम् ।
अपूर्वस्यादयो ना[5]स्ति स्थितपूर्वं च नश्यति ॥ २७ ॥
ईदृशं यदि बुद्धत्वं वृथा सर्वमतोऽखिलम् ।
भयेभ्यो मरणादिभ्यो मुक्तो नारकपीडनात् ॥ २८ ॥
प्रियाप्रियादिदुःखैश्च रहित[7]स्त्वजडात्मकः ।
सर्वधर्मस्वभावज्ञः सर्वज्ञो हि निरुच्यते ॥ २९ ॥

---

[1] H ०ते ।
[2] H तत्त ।
[3] B ०र्थैं० ।
[7] HN ०तो य० ।
[5] MSS तु तज्ज० ।
[4] H त्व० ।
[6] HN ०याज्ञा० ।

स्वभावज्ञानसर्वज्ञ इति सम्बुद्धदेशितः ।
सर्वं प्रत्यक्षतो वेत्ति सर्वज्ञस्तेन कथ्यते ॥ ३० ॥
[निहन्ति][1] नारकं दुःखं संसारेऽपि प्रवर्त्तकम् ।
चक्रवर्त्यादिसौख्यं च लभते नात्र संशयः ॥ ३१ ॥

ज्ञानसिद्धौ निराकारनिराकरणश्चतुर्थः परिच्छेदः ।

# पञ्चमः परिच्छेदः।

एवं दोषसमूढत्वात् निराकारमतो न चेत्।
ततो निश्चित्ततातत्त्वमधुना प्रतिषिध्यते ॥ १ ॥

किञ्चिन्मूढतरावस्थं ज्ञानमिच्छन्ति मोहिनः।
मूढभावनया मूढं प्राप्नुवन्त्येव दुर्धियाः ॥ २ ॥

हेतुना सदृशं ज्ञानं फलं लोके तु युज्यते।
कोद्रवा नहि जायन्ते शालयः क्वचिदेव तु ॥ ३ ॥

निर्विकल्पमतो ज्ञानं नहि युक्तं विधीयते।
ज्ञानस्य निर्विकल्पत्वमन्यथा नहि युज्यते ॥ ४ ॥

ज्ञानस्य निर्विकल्पत्वं सत्यमुक्तं तथागतैः।
तत्त्वज्ञानस्य मूढस्य निर्विकल्पत्वकल्पना

निर्विकल्पनमात्रत्वं स्मरणं क्रियते यदि।
पदार्थान्येतानि सर्वाणि स्मर्यन्ते तु कथं नहि ॥ ९ ॥
उभयार्थविहीनत्वात् न ज्ञानं नापि सर्ववित्।
प्रतिषिद्धमिदं तत्त्वं मिथ्याज्ञानं तु मोहिनाम् ॥ १० ॥

ज्ञानसिद्धौ मूढभावनानिषेधः पञ्चमः परिच्छेदः।

# षष्ठः परिच्छेदः ।

नाश्वासं नापि प्रश्वासं तत्त्वं भवितुमर्हति ।
तयोर्मध्ये भवन्नापि वायुस्तत्त्वं कथं भवेत् ॥ १ ॥
मध्ये न किंचिदप्यस्ति कथं तत्त्वं भविष्यति ।
वायुर्यदि भवेत्तत्त्वं भस्त्रापार्श्वे भविष्यति ॥ २ ॥
प्रेरणे भस्त्रया वायोः तथैव क्षेपणेऽपि च ।
यथा कश्चित् धमेद् भस्त्रां तद्वद्देहे धमेन्मनः ॥ ३ ॥
न वायुधमकः कश्चित् न वायुध्मामकस्तथा ।
कायस्य धमकेनेव भस्त्राया धमकेन च ॥ ४ ॥
न विशेषः तयोर्दृष्टो योगिभिः तत्त्वदर्शिभिः ।
नरेण मनसा तुल्यं धमकत्वक्रियां प्रति ॥ ५ ॥
भस्त्राया वायुना तुल्यं श्वासप्रश्वासवायुना ।
भस्त्रावातं यथा तत्त्वं देहवायुस्तथा भवेत् ॥ ६ ॥
देहवायुः यदा तत्त्वं सर्वद्वारविनिर्गतम् ।
न तत्त्वं युज्यते वक्तुं [मावेश]त्वात् प्रभंजनः ॥ ७ ॥
भ्रष्ट[मार्गग]मूढानां मिथ्यातत्त्वप्रभाविनाम् ।
न तेषां सुगतौ जन्म गतिरेकैव नारकी ॥ ८ ॥

ज्ञानसिद्धौ श्वासप्रतिषेधः षष्ठः ।

---

# सप्तमः परिच्छेदः।

सुखं द्वीन्द्रियजं केचित् तत्त्वमाहुर्नराधमाः।
[तत्त्वं][1] महासुखं नैव प्रवदन्ति जिनोत्तमाः ॥ १ ॥
प्रतीत्योत्पादसम्भूतं न तत्त्वं जायते क्वचित्।
न तत्सुखं स्वभावेन विद्यते सर्वदा यतः ॥ २ ॥
सर्वतायागतं ज्ञानं स्वसंवेद्यस्वभावकम्।
सर्वसौख्याग्रभूतत्वात् महासुखमिति स्मृतम् ॥ ३ ॥
अनित्यं महासुखं नैव सदा नित्यं महासुखम्।
कच्छुकण्डूयनोत्पन्नं कथं महासुखं नहि ॥ ४ ॥
रागतुल्यं सुखं नास्ति तज्जिनेभ्यः समाददन्।
भुञ्जीत सर्वकामांश्च जुगुप्सां नैव कारयेत् ॥ ५ ॥
योगभद्रेषु सर्वेषु वज्रसत्त्वेन देशितम्।
योगिनां चित्तसौख्यार्थं न तत्त्वं परमार्थतः ॥ ६ ॥

ज्ञानसिद्धौ महासुखप्रतिवर्णिकाप्रतिषेधः सप्तमः।

---

[1] MSS तथापि।

# अष्टमः परिच्छेदः।

[स्वसं][1]वेद्यं प्रतिपिण्डं सम्यग्ज्ञानमतो नहि।
मिथ्या तत्त्वानि सर्वाणि कल्पितानि सुमोहिनाम्॥ १॥
स्वबुद्धेर्न निषेध्यानि अन्यान्यपि विचक्षणैः।
सम्यक् तत्त्वं यथा लभ्यं तदिदानीं प्रकथ्यते॥ २॥
परीतबुद्धयः सत्त्वा अल्पपुण्याल्पवीर्य्यकाः।
कथं ते प्राप्नुयुर्ज्ञानं सर्वताथागतं परम्॥ ३॥
[अ][2]नुक्रमं ब्रवीम्येष सर्वबुद्धैस्तु देशितम्।
जानुनी संप्रतिष्ठाप्य धरण्यां सुप्रतिष्ठितः॥ ४॥
वदेदेवं ततः श्राद्धो ऋजुकायः कृताञ्जलिः।
संबुद्धाः शासिनो लोके भविष्यन्तोऽप्यनागताः॥ ५॥
वर्त्तमाना गताश्चैव सद्धर्म्मप्रतिदेशकाः।
सर्वबुद्धानहं वन्दे एतान् तत्त्वप्रदेशकान्॥ ६॥
अहं निर्य्यातयाम्येष पूजोपस्थानकर्म्मणि।
आत्मानं सर्वबुद्धानां प्रतिगृह्णन्तु नायकाः॥ ७॥
सर्वपूजाविशेषैस्तु पूज[यंश्च][3] जगद्गुरून्।
आकाशधातुपर्य्यन्तै[रा][4]सुमेरुपरिग्रहैः॥ ८॥
धर्म्मधातुसमुत्पन्नैरचिंतैर्वि[वि]धैर्वरैः।
अतीतानागतैः सर्वैर्वज्रसत्त्वविकुर्विंतैः॥ ९॥

---

[1] MSS सख। [2] MSS तद०।
[3] MSS ०यन्। [4] MSS ०न।

समुत्पन्नानि पापानि सर्वाण्यपि [स तत्त्व[1]]वित्।
प्रतिदेश्य समादध्यादकरसम्वरं पुनः॥ १०॥
यत् पुण्यं सर्वबुद्धानां तत्सुतानां च धीमताम्।
श्रावकसङ्घबुद्धानां यच्चान्यत् सर्वदेहिनाम्॥ ११॥
अनुमोदे तथा पुण्यं सर्वजन्मसु यत्कृतम्।
स्वकीयं परकीयं च संहृष्टेन तु चेतसा॥ १२॥
धर्मतत्त्वरथारूढा दशदिक्सर्वतः स्थिताः।
धर्मद्योतनदक्षास्तु महाकारुण्यचेतसः।
[2]प्रकाशयन्तु ते धर्मा विज्ञप्तिं तत्करोम्यहम्॥ १३॥
कृताञ्जलिपुटो भूत्वाऽसौ निर्वान्तु कदा कथम्।
भवेयुः प्राणिनो बुद्धाः सर्वे यावत् प्रतिष्ठिताः॥ १४॥
तावत् तिष्ठन्तु ते नाथाः सर्वसत्त्वार्थकारकाः।
कायवाङ्मनसं पुण्यं कृतं कारितमेव वा॥ १५॥
यच्चानुमोदितं किंचित् तेन लोकोऽस्तु सर्ववित्।
त्रिकालं तु यथाशक्त्या पुष्पादिभिः प्रपूज्य च॥ १६॥
मण्डलं सर्वबुद्धेभ्यो वज्रसत्त्वेभ्य एव च।
कृत्वा पश्चात्ततं मिश्रं अमिश्रं वा[3] प्रकल्पितम्॥ १७॥
सर्वकल्पविमुक्तात्मा गृह्णीयात् समयादिकम्।
तत्त्वसंग्रहतन्त्रादौ स्थितं समयसम्वरम्॥ १८॥
प्राणिनश्च [न] ते[4] घात्या अदत्तं नैव चाहरेत्।
नाचरेत् काममिथ्या वा मृषां नैव हि भाषयेत्॥ १९॥

---

[1] MSS जगत्॰।
[2] B omits प्रकाशयन्तु...नाथाः।
[3] HB ॰आदा।
[4] B स्वयं तैः।

सर्वानर्थस्य मूलत्वात् मद्यपानं विवर्जयेत् ।
पैशुन्यमथ पारुष्यं सम्भिन्नालापभाषणम् ॥ २० ॥

अविद्यासत्त्वविद्वेषमिथ्यादृष्टिं च सर्वथा ।
उत्पाद्याम्यपूर्वं तु स्थापयिष्यामि निर्वृतौ ॥ २१ ॥

समाध्यङ्गं ततः सर्वं गृह्णीयात् संवरं परम् ।
बोधिचित्तं तथोत्पाद्यं सर्वपुण्यमहोदयम् ॥ २२ ॥

सर्वसत्त्वं महान्तं च स्थाप्य सर्वज्ञभूमिषु ।
सर्वदुःखहरो ह्येषां भवेयं करुणात्मकः ॥ २३ ॥

सर्वसम्पत्प्रदाता च बोधिमार्गोपदेशकः ।
सम्यक् चित्तं समुत्पाद्यं ममत्वं सर्वदेहिषु ॥ २४ ॥

बोधिचित्तमिदं ज्ञेयं अन्यथा वितथं भवेत् ।
बोधिचित्तं न तन्नाम विषमत्वं यदा स्थितम् ॥ २५ ॥

न तदुत्पद्यते ज्ञानं आदिमध्यान्तवर्ज्जितम् ।
नाधिष्ठानं प्रकुर्वन्ति सर्वदा सर्ववज्रिणः ॥ २६ ॥

सर्वदेवादयश्चापि न तं रक्षन्ति विद्विषः ।
तस्मादुपायवियोगी सर्वसत्त्वैकबान्धवः ॥ २७ ॥

अविसंवा[द]कं चित्तं समुत्पाद्य ततो दृढम् ।
कृतेनानेन सम्बुद्धाः तुष्टाः सर्वज्ञतात्मकाः ॥ २८ ॥

अधिष्ठानं प्रकुर्वन्ति महाबलपराक्रमाः ।
मारविघ्नापदश्चापि नावतारगवेषकाः ॥ २९ ॥

वज्रपाण्यादयो हृष्टा रक्षां कुर्वन्ति नित्यशः ।
सर्वपापविशुद्धिं च लभतेऽसौ नरोत्तमः ॥ ३० ॥

सर्वपुण्योदयस्यापि सम्यक्ज्ञानोदयं भवेत्[1]।
अन्यथा नहि तत्त्वानां उ[द]यं सर्वथा भवेत् ॥ ३१ ॥
तस्मादादौ विधानज्ञो य[द्]ज्ञानं प्राप्तुमिच्छति।
जन्मनीहैव सिद्ध्यर्थं [नि]रुपद्रवतां प्रति ॥ ३२ ॥
सर्वविघ्नविनाशार्थं आयुरारोग्यवर्द्धनम्।
करणीयमतोऽवश्यं योगिना फलकाङ्क्षिणा ॥ ३३ ॥
नानातन्त्रेषु निर्दिष्टं कृपया बुद्धवज्रिणा।
एष मार्गस्थितो योगी शुक्लपक्षे यथा शशी।
वृद्धिक्रमं समायाति क्षयं न तु कदाचन ॥ ३४ ॥
हीनवीर्य्यो यदा कश्चित् बुद्धत्वं प्राप्नुयान्नहि।
चक्रवर्त्तिसुखं राज्यं सर्वजन्मसु कारयेत् ॥ ३५ ॥
यत्पुण्यं सर्वबुद्धानां सर्वदिक्कालभाविनाम्।
तत्तस्य रोमकूपाग्रे प्रवदन्ति जिनोत्तमाः ॥ ३६ ॥

ज्ञानसिद्धौ पुण्यज्ञानसम्भारप्राप्त्युपायोऽष्टमः ॥

---

[1] B उभयं।

# नवमः परिच्छेदः ।

कथं देशनया पापं[1] क्षयं गच्छेत् सुदारुणम् ।
अनुमोदनया पुण्यं कथं सम्भुज्यते तथा ॥ १ ॥
प्राणान्तपातकादीनि कर्त्तव्यं क्वचिदब्रवीत् ।
क्वचिन्नेति च तन्त्रेषु कथं तन्न विरुध्यते ॥ २ ॥
पञ्चामृतादिकं सर्वं अभक्ष्यं गम्यते तथा ।
अप्रियादीन्यनेकानि कथं तैस्तु शुभोदयः ॥ ३ ॥
[2]यथाक्रमं ब्रवीम्येषां तन्त्रे तन्त्रे निदर्शितम् ।
मन्दधीजनबोधार्थं सर्वबुद्धैः [सर्वज्ञिभिः[3]] ॥ ४ ॥
यत्कर्म्म क्रियते किञ्चित् कायवाङ्मनसैः क्रिया ।
चतुर्थी विद्यते नान्यस्तेषामेवं विचार्य्यते ॥ ५ ॥
[4]चित्तेन न विना कायः किञ्चित् कर्त्तुं भवेत् क्षमः ।
वचनं च विना तेन भवेत् नैव कदाचन ॥ ६ ॥
काये वाक्कर्म्मणी तस्माद्भवतां मानसेऽद्वयम् ।
चित्तेनैव जगत् सर्वं क्रियते यत् शुभाशुभम् ॥ ७ ॥
[5]हितार्थं यद्भवेत्कर्म्म सर्वं सच्चरितं भवेत् ।
विपर्य्ययादपुण्यं तत् प्रवदन्ति जिनोत्तमाः ॥ ८ ॥

---

[1] HB ०पापार्थं ।

[2] B repeats प्राणान्त० etc , instead of this line

[3] MSS सर्वज्ञिभि ।

[4] This and the two following lines are repeated in all MSS.

[5] H omits these three lines.

चित्तेनैव तु तत्सर्वं क्रियते यत् शुभाशुभम्।
चित्तेनैव भवेन्नाश इत्युवाच जगद्गुरुः ॥ ९ ॥
सत्त्वापकारनिष्पन्नं यत्पापं परिकीर्त्तितम्।
हितचित्तं समुत्पाद्य संभ्रष्टः प्रतिदेशयेत् ॥ १० ॥
उत्साहेन क्षतं पूर्वं अपकारसमन्वितम्।
प्रतिप[1]क्षात् भवेन्नाशो यस्मात् तेनैव तत्कृतम् ॥ ११ ॥
घटमुत्पाद्य यः कश्चित् भिनत्त्येव तु तत् स्वयम्।
तथा पापं समुत्पन्नं नाशयेत् आत्मना स तु ॥ १२ ॥
देशयिष्याम्यहं पश्चा[2]दिति मूढः करोति चेत्।
न चास्य देशना युक्ता न पापं तस्य नश्यति ॥ १३ ॥
तथा पुण्यविनाशश्च तद्वदेव भवत्यपि।
क्षते पुण्येऽपि छि[द्र]त्वाद् भवेन्नाशं न संशयः ॥ १४ ॥
दद[3]तश्च यदा चित्ते दातुमिच्छा न वर्त्तते।
दत्तेऽपि च न तत्पुण्यं प्रभविष्यति कस्यचित् ॥ १५ ॥
सर्वेषामधिकं स्थानं यत्र सर्वं विनश्यति।
कल्पकोटिसहस्रैश्च समुपात्तं शुभं महत् ॥ १६ ॥
उत्पन्नबोधिचित्तस्य पुण्यसम्भारसञ्चयः।
कल्पकोटिशतोपात्तः क्षणादेव विनश्यति ॥ १७ ॥
तादृशेऽप्रतिघे नान्यद् द्वितो[यम]नुजेऽप्रिये।
ततोऽपि रक्ष्यमत्यर्थं एवमुक्तं तथागतैः ॥ १८ ॥
तस्मिन् स्वल्पोपकारेण पुण्यराशिर्महान् भवेत्।
सर्वेषां सर्वसौख्यानां आकरत्वाद्गुणोदधौ ॥ १९ ॥

---

[1] H ०भ० । [2] H स्वा० । [3] B ०त्र च

केचिन्मूढतरा बाला युक्त्यागम[म]पश्यकाः ।
कल्पे नैव भवेत् पापं इत्या[हुः स्वा]त्मनाशकाः ॥ २० ॥
कल्पनारहितो योगी यदि पापैर्न लिप्यते ।
द्वेषाद्युत्पादहेतौ तु विकारित्वं न युज्यते ॥ २१ ॥
विहाय लौकिकीं वृत्तिमन्यथा तु भवेन्न किम् ।
शिरसा गमनं युक्तं तथा पाषाणभक्षणम् ॥ २२ ॥
शीतवातपिपासादिबाधा तस्य न युज्यते ।
आक्रोशाद्यपकारैश्च न खेदमुपसंहरेत् ॥ २३ ॥
स्वकीयं यदि कर्त्तव्यं लोभाद्याकृष्टदुःखजम् ।
निर्विकल्पं प्रकल्प्येत न तथान्यच्च तद्भवेत् ॥ २४ ॥
अनुत्पादक्षयं नैव पापानां कर्म्मणामिह ।
क्रोधाहङ्कारयोगाच्च न पापं परिमुच्यते ॥ २५ ॥
देवतैव च तत् सर्वं करोतीति प्रकल्प्यते ।
उत्पादात् पूर्वमेवासौ कारयेत् न कथं भृशम् ॥ २६ ॥
देवतैव करोतीति मिथ्येयं परिकल्पना ।
यस्मात् लोभाभिभूतानां क्रियेयं कर्त्तुमिच्छताम् ॥ २७ ॥
अनुमोदादिसर्वाणि चिन्तायत्नानि सर्वतः ।
पुण्यसंभारयुक्तानि ज्ञातव्यानीह धीधनैः ॥ २८ ॥
कायवाक्सहितं हीनं तत्पुण्यं सम[म]स्तु ते ।
एकान्ततीव्रचित्तस्य यत्पुण्यं बुद्धवर्णितम् ॥ २९ ॥

---

[1] HB ०ल्प० ।
[2] MSS ०ङ्करा० ।
[3] MSS चेत्तत् ।
[4] H कालयत्न ।
[5] H ०यते ।
[6] HN ०न्तचेत्ता० ।
[7] H थं नेह ।
[8] B एकस्य ।

प्राणिहिंसादि यत् कर्म्म लोभाद्याविष्टचेतसः ।
कुशलं न भवेत् सर्वं पुण्यं तु करुणोत्थितम् ॥ ३० ॥
यत् कर्म्म परहितार्थं क्रियते तु कृपात्मकैः ।
तत् सर्वं पुण्यमित्याहुर्जगदाशाप्रपूरकैः[1] ॥ ३१ ॥
निषेध्यमप्यनुज्ञातं कृपया दृढचेतसाम् ।
न तु स्वार्थाभिभूतानां करुणाहीनदेहिनाम् ॥ ३२ ॥
कृते पुण्येऽप्यनर्थाय कस्यचिद्विष्यतो जनम् ।
पापमेव भवेत् तस्य प्रवदन्ति जिनोत्तमाः ॥ ३३ ॥

उक्तं च—

कल्यान्ताद्बोधिसत्त्वानां शुभं वा यदि वाऽशुभम् ।
सर्वं[2] कल्याणतां[3] मेति तेषां वश्यं यतो मनः ॥ ३४ ॥

इति ज्ञानसिद्धौ पापपुण्योत्पादविनाशपरिज्ञाननिर्देशो नवमः ॥

---

[1] MSS कः ।  [2] HB ०र्वं० ।  [3] HB ०ता० ।

# दशमः परिच्छेदः।

पञ्चामृतमविघ्नार्थं चित्तसंसाधनापरैः[1]।
अ[2]जादिमांसमप्येवं योगिनां विहि[3]तं जिनैः ॥ १ ॥
सर्वेऽपि प्राणिनः[4] सर्वं भक्षन्तोऽपि न बुद्धकाः।
न प्रजानन्ति ते मूढाश्चिन्ता[5]विगतबुद्धयः ॥ २ ॥
सर्वसम्पूर्णभूतत्वात् कायस्तावत् शुचिर्न हि।
तत्सा[6]वभक्षकः कश्चित् सर्वं भुक्तं न तेन किम् ॥ ३ ॥
क्षीरादिकं तथा सर्वं सर्वेषामेव [दे][7]हिनाम्।
भक्ष्याभक्ष्यप्रसिद्धानां शुचित्वं नैव सिध्यति ॥ ४ ॥
भक्तवस्तूनि सर्वाणि अशुचीनि प्रबुध्यते।
यस्माज्जलेन संभूतिः तेषामिह प्रदृश्यते ॥ ५ ॥
वृष्टि[8]जलसमूहेन सर्वं प्रक्षाल्य कुत्सितम्।
सर्वसस्यानि निष्पाद्य समुद्रादीन् विशेत् ततः ॥ ६ ॥
तज्जैरशुचिभिर्युक्तैर्नागैरुत्थापितं जलम्।
पुनर्वृष्टेः तथा सर्वसस्यं सम्पादयेज्जलम् ॥ ७ ॥
पुष्करिण्यादिके तद्वत् सर्वेषां सर्व[क्षा][9]लनम्।
शुच्यशुच्यादिकं तस्मात् सर्वं नैवात्र विद्यते ॥ ८ ॥

---

[1] MSS ०रः।
[2] H ०रा०।
[3] MSS ०दि०।
[4] H सर्वप्रियाणि।
[5] B ०त्ता०।
[6] MSS ०च्छा०।
[7] B एके, H बद्धे०।
[8] B हां।
[9] MSS ०खा०।

शुचित्वं अस्ति चेत् किञ्चित् अशुचित्वं भविष्यति।
शुच्यभावादशुचित्वं सर्वथा नोपलभ्यते ॥ ९ ॥
आपेक्षिकत्वमन्योन्यपारापारकवद्यथा।
लौकिकी कल्पनैवैषा शुच्यशुच्यादिकल्पना ॥ १० ॥

ज्ञानसिद्धौ शुच्यशुच्यकल्पनाविविक्तो नाम दशमः ॥

# एकादशः परिच्छेदः ।

अगम्यागमनस्यापि विचारः क्रियतेऽधुना ।
योगिनां समनुज्ञातं अविरुद्धं यथा तु तत् ॥ १ ॥

सर्वेषां देहिनामेव अस्त्येवोत्पादनाशनम् ।
तच्च कर्म्मवशादेव सर्वदा[1] त्रिभवे [भवे]त् ॥ २ ॥

माता पिता च पुत्रः स्यात् पुत्रो माता पिता भवेत् ।
चेटी[2] भार्य्यापि तौ स्यातां भार्य्या माता भवत्यपि ॥ ३ ॥

एवमादीनि रूपाणि अ[3]नेकानि सुविस्तरैः ।
भवेऽ[4]नादौ भवन्तीति वज्रसत्त्वेन देशितम् ॥ ४ ॥

एवं स्थिते तु संसारे दीर्घकालप्रवर्त्तिते ।
माता पिता न [भू]तो हि कश्चित् सत्त्वो न विद्यते ॥ ५ ॥

दुहित्राद्याः तथा सर्वाः प्राग्भूताः सन्ति पद्धतौ ।
तस्माच्च महती कार्य्या कृपेत्युक्ता जिनोत्तमैः ॥ ६ ॥

अत एव तु ते नार्याः वज्रसत्त्वादयो वराः ।
दुहित्रादिरनुज्ञा[तो] योगिनां चित्तसाधने ॥ ७ ॥

कल्पनाजलपूर्णस्य संसारस्य महोदधेः ।
वज्रयानं समारुह्य को वा पारं गमिष्यति ॥ ८ ॥

मिथ्याज्ञानानि सर्वाणि युक्त्यागमसमायुतैः ।
निषिद्धानि क्रमात् तानि सर्वदीपाकराणि हि ॥ ९ ॥

ज्ञानसिद्धौ गम्यागम्यरहितो नाम एकादशः ॥

---

[1] H omits.
[2] H ॰ति ।
[3] BH ॰च॰, N ॰ष्य॰ ।
[4] HN भावत्व॰ ।

# द्वादशः परिच्छेदः ।

वज्रज्ञानप्रबोधार्थं युक्तिरप्युच्यतेऽधुना ।
योगतन्त्रोक्तदृष्टान्तैर्हितायोत्तमयोगिनाम् ॥ १ ॥
रूपकायादयो भावास्तत्त्वरूपं यथा न ते ।
तद्वारणं कृतं पूर्वं अरूपत्वं ततः स्थितम् ॥ २ ॥
सर्वदोषप्रसङ्गित्वाद् भावस्तत्त्वं भवेत् नहि ।
अभावोऽपि न तत् तत्त्वं सर्वदुःखाकरं परम् ॥ ३ ॥
भावाभावौ न तौ तत्त्वं भवेत् ताभ्यां विवर्जितम् ।
न देशस्थमतो युक्तं सर्वज्ञो न भवेत् तदा ॥ ४ ॥
व्यापित्वं वज्रकायत्वं अविकारित्वं एव च ।
सर्वज्ञत्वमतः सिद्धं सम्यग्ज्ञानस्य युक्तितः ॥ ५ ॥
रूपिणो नहि व्यापित्वं वज्रकायमतो नहि ।
अविकार्य्यं न तस्यास्ति न सर्वज्ञो भविष्यति ॥ ६ ॥
क्रमात् जानाति यः कश्चित् सर्वं नासौ प्रबुध्यते ।
ज्ञेयानामप्रमाणत्वान्नासौ सर्वज्ञ इष्यते ॥ ७ ॥
कल्पकोटिसहस्रेण नासौ ज्ञातुं भवेत् क्षमः ।
एकस्मिन्नेव दिग्भागे यत् ज्ञेयं परिकीर्त्तितम् ॥ ८ ॥
उत्पद्य चेत् भवेन्नाशः तस्मादुत्पाद्यते नहि ।
सुस्थितं चैव ज्ञानं तत् भ्रममाचविनाशनम् ॥ ९ ॥
गतागतं भवेद्यस्य [सुस्थितत्वं] न विद्यते ।
चलत्वादेकदेशस्थान्नाशस्तस्य प्रयुज्यते ॥ १० ॥

---

[1] B ०धि० ।

[2] N प्रकी० ।

अवर्ण्यो यो भवेद्धर्म्मः कस्तं नाशयितुं क्षमः ।
शस्त्रोदकविषाग्नीनां वुद्धो जातो भवेत् न तु ॥ ११ ॥
[1]सर्वाकारप्रतिष्ठात्मा निश्चलो गगनोपमः ।
असंक्लिष्टोऽविकारश्च सर्वथा सर्वकालिकः ॥ १२ ॥
असार्वकालिको यस्तु न सर्वज्ञो भवेत् स तु[2] ।
तस्मात् सर्वप्रकालं तु भवितव्यं इति स्मृतम् ॥ १३ ॥
स्थितमेवं महाज्ञानं सर्वेषामेव देहिनाम् ।
न प्रजानन्ति मूढास्ते वाला मोहपटावृताः ॥ १४ ॥
लोष्टश्च धावति क्षिप्तो नासौ प्रक्षेपकस्तथा ।
एवं चित्तेन यद्धाव्यं तद्धावति[3] न चित्त[कम्[4]] ॥ १५ ॥
चित्तेन भास्यते यत्तत् तदेव तु निरीक्ष्यते ।
इदं तत् कीदृशं चित्तमिति चिन्ता न व[5]र्त्तते ॥ १६ ॥

ज्ञानसिद्धौ तत्त्वस्थापनं नाम द्वादशः ॥

---

[1] H omits three lines. [2] N सदा ।
[3] H भावयन्ति । [4] MSS ०तां । [5] HB प्रव० ।

# त्रयोदशः परिच्छेदः ।

एष मूढतरो लोको मोक्षार्थमात्मनिश्चये ।
प्रपातेऽपि क्षिपत्येव पर्जन्येन प्रचोदितः ॥ १ ॥

ईदृशी दृश्यते चेष्टा बहूनामपि देहिनाम् ।
सन्त्यज्य सुगतौ [यानमन्यत् मार्गं समाश्रयेत्][1] ॥ २ ॥

तद्विधो[2] मनुजः कश्चित् मार्गमन्यत् प्रदर्शयेत् ।
पृच्छकोऽपि न तं पृच्छेत् [येन तत्त्वं][3] प्रबुध्यते ॥ ३ ॥

यदि मोहवशात् मार्गं दर्शयन्त[4]मपश्यकम् ।
न शिवं लभ्यते गन्तुस्तन्मार्गेणैव यायिनः ॥ ४ ॥

स्वयमपश्यको मार्गं कथमन्यं नयेद्ध्रुवम् ।
द्वावेव[5] यदि गच्छेतां तयोर्दुःखं न संशयः ॥ ५ ॥

अटव्यां संप्रविष्टस्य जात्यन्धस्य यथा क्रिया ।
द्वितीयं तादृशं कश्चित् कथं ग्रामं प्रवेशयेत् ॥ ६ ॥

एवं जात्यन्धभूतास्ते सम्यग् ज्ञानमपश्यकाः ।
अशक्तास्तत्पदं प्राप्तुं कथमन्यं तु प्रापयेत् ॥ ७ ॥

तस्मात् परीक्ष्य कर्त्तव्यं गुरूणां पर्य्युपासनम् ।
शिष्यैर्भक्तिसमायुक्तैः प्रवदन्ति जिनोत्तमाः ॥ ८ ॥

रत्नत्रयेषु बुद्धात्मा कृपावान्[6] सर्वजन्तुषु ।
त्यागादिसंयतो धीरः सर्वपुण्यमहोदयः ॥ ९ ॥

---

[1] MSS मार्गमाश्रयेत् only.
[2] B नह्यन्यो ।
[3] MSS यद्यत्तत्त्वं ।
[4] B ०न्तु० ।
[5] MSS द्वावं द्वौ (?) ।
[6] MSS ०दा० ।

बोधिचित्तसमुत्पन्नः प्रसन्नो गुणवान् सुधीः ।
अक्रोधनो महोत्साही धर्म्मगम्भीरनिश्चयः ॥ १० ॥
सयुक्तिकं धर्म्मदानं निरा[भा]सं सदा मतम् ।
अल्पेच्छता सदा तस्य सम्भारद्वयसम्भृतः ॥ ११ ॥
गुरुरेष समाख्यातः सर्व्वबुद्धैः सवज्रिभिः ।
स एव सर्वसत्त्वानां शासको लोकनायकः ॥ १२ ॥
अन्ये च गुरवः ख्याता मिथ्याज्ञानाभिमानिनः ।
लोभाद्यर्थं प्रकुर्वन्ति धर्म्म[स्य] देशनां पराम्[1] ॥ १३ ॥
पापमित्राश्च ते बालाः सत्त्वनाशे प्रतिष्ठिताः ।
मारपाक्षिकगोत्रास्तेऽपरात्मानो विनाशकाः ॥ १४ ॥
वर्जनीया[श्च ते] सत्त्वा न तेषां पर्य्युपासनम् ।
न तेषां प्रतिघं कुर्य्यात् न ते [पूज्य]तरा भवेत् ॥ १५ ॥
श्रावकैः सह संवासो [यथा][2] नेष्टं तथागतैः ।
तथैवैवंविधैः सार्द्धं न संवासो विशिष्यते ॥ १६ ॥
पूर्वोक्तलक्षणैः तस्मात् आचार्य्यो हि विधीयते ।
शिष्यस्य लक्षणं चैव[3] कथ्यते स[3] यथा भवेत् ॥ १७ ॥

ज्ञानसिद्धौ गुरुलक्षणनिर्देशः त्रयोदशः ॥

---

[1] B धर्मदेशतां वर ।
[2] MSS यत्था॰ ।
[3] MSS ॰तैव ।

# चतुर्दशः परिच्छेदः ।

नौकारूढो यथा कश्चित् कर्णधारः सुशिक्षितः ।
पारं महोदधेर्याति नान्यथा पारगो भवेत् ॥ १ ॥
तद्वद् गुरौ चिरत्ने च बोधिचित्ते च[1] भक्तिमान् ।
करुणा च तथा लोके नौरियं संप्रकीर्त्तिता ॥ २ ॥
गुरुः कर्णधरो विद्वान् नौका धर्म्मः प्रकाशितः ।
संसारपारगन्तॄणां वज्रसत्त्वेन देशितम् ॥ ३ ॥
कर्णधारं विना नौका पारं प्राप्तुं क्षमा नहि ।
गुणैः सर्वैः[2] प्रपूर्णोपि ना[3]गुरुर्भवपारगः ॥ ४ ॥
तस्मादेवास्य चैवेदं कार्यं सर्वं दृढव्रतैः ।
सदा पूजारतो योगी बाह्यैराध्यात्मिकैस्तथा ॥ ५ ॥
वन्दनादिक्रियाः सर्वाः प्रकुर्य्यात् सर्वकालिकाः ।
श्रद्धा[4]प्रज्ञासमायुक्तः कृपार्द्रः सर्वजन्तुषु ॥ ६ ॥
अक्रोधनोऽविसंवादी त्यागादिगुण[भूषितः][5] ।
सुवीर्य्यश्च महोत्साही गुरोराज्ञां सदा करः ॥ ७ ॥
आज्ञस्तश्च स्वयं बुद्ध्वा परि[चर्या[6]]दिकं [चरे][7]त् ।
यथाशक्ति यथालाभं भोज्यभक्तादिकं तथा ॥ ८ ॥

---

[1] B न ।
[2] HN ०वैं ।
[3] A न ।
[4] HB श्रद्ध० ।
[5] B ०वि[ भू ]षित, H ०विभूतय ।
[6] MSS ०स्करा० ।
[7] MSS ०वदे० ।

तिरस्कारे कृतेऽप्येवं स्वयमेव न दुर्मनाः ।
शिष्यः सर्वगुणोपेतो युक्त्यागमपरीक्षकः ॥ ९ ॥
अपरीक्षकजातीयः पृच्छेत् [1]परहितञ्च यः ।
शिष्यो न[2] भवितुं शक्तो[3] बुद्धैरेवं प्रदर्श्यते ॥ १० ॥
मृत्पिण्डो हि यथा बालैः क्षिप्यते यत्र तत्र वै ।
तद्वत् परवशः कश्चित् [स शिष्यत्वस्य][4] भाजनम् ॥ ११ ॥

ज्ञानसिद्धौ शिष्यलक्षणपरिच्छेदः चतुर्दशः ॥

---

[1] MSS पारहितस्य य (?)।
[2] H शिष्येण।
HB ॰क्तया।
[4] MSS सर्वमस्य न।

# पञ्चदशः परिच्छेदः।

सम्यक्तत्त्वं यथाभूतं पूर्व्वमुक्तं सयुक्तिकम्।
सर्वतन्त्रे स्थितं तत्त्वं तेभ्यः किञ्चिन्निगद्यते ॥ १ ॥

चोरशब्दो [यथा] लोके भक्ष्यार्थं प्रतिपादयेत्।
केषाञ्चित् चोरमेवाहुः तन्त्रेऽप्येवं पदास्तथा ॥ २ ॥

तैरे[1]वाक्षरनिर्देशैर्बुदमध्याधि[2]मात्रकैः।
धर्म्मशब्दो[3]च्यते बुद्धैः सत्त्वानुग्रहकारकैः ॥ ३ ॥

केवलं तत्त्वमेवाहुः कश्चित् [मध्येन्द्रिय][4]स्तथा।
कश्चित् त्वदिन्द्रियः कर्म केवलं वक्ति नान्यथा ॥ ४ ॥

श्रीसमाजोत्तरे देशितम्—

अनादिनिधनं शान्तं भावाभावाक्षयं विभुम्।
शून्यताकरुणाभिन्नं बोधिचित्तमिति स्मृतम् ॥ ५ ॥

अनादिनिधनमिति उत्पादविनाशाभावम्। अनेन [5]व्यापित्वं अवि[6]कारित्वं सार्वकालिकत्वं च कथितम्। देशस्थरूपि[7]विकारिकालान्तरिकानां विनाशित्वात्। अरू-पित्वेऽपि देशस्थो यदि स्यात् विनाश्येव भवति। यथा कस्तूरीकादीनां सुगन्धं अरूप्यपि देशस्थत्वात् कस्तूरी-

[1] H तेनै०।
[2] MSS ०दि०।
[3] MSS ०वो०।
[4] MSS मन्द्रेय० (?)।
[5] All the MSS repeat from व्यापित्व...परिवारयामीति।
[6] H ०पि०।
[7] B ०पे, N ०पौ।
HB ०ष्य०।

कादीनां तद्वासितंद्रव्यस्य वाऽभावे विनाशि स्यादिकारि च। शान्तमिति सर्वक्लेशानामागन्तुकत्वात् प्रकृतिशान्तम्। पूर्वोक्तगुणयुक्तत्वा[त्तदेव] भावाभावाक्षयम्। विभुं प्रभुं स्वामी सर्वेषां लौकिकलोकोत्तरार्थसम्पादकत्वात्। शून्यता-करुणाभिन्नं इति। सर्वधर्मनिःस्वभावतया सर्वतथागत-ज्ञानपरिज्ञानं[1] शून्यता [तया] करुणया वा अभिन्नमेकी-भूतं[2] यत् चित्तम्। करुणा नाम सर्वसत्त्वान् अस्मिन्नेव ज्ञानराजे प्रतिष्ठापयिष्यामि, सर्वसुखोपधानैश्च परि-वारयिष्यामीति सम्यगाशयः। एतदुक्तं भवति—

सर्वधर्मस्वभावज्ञो योगी सर्वतथागतैः।

सह अन्योन्यव्यापकभावेन सदा स्थितो बुद्धत्वकारः सर्वसत्त्वेषु महाकरुणाप्रमाणानुगतं बोधिचित्तं वज्र इत्यर्थः।

अनेन भावनाप्येव कर्त्तव्येति निदर्शितम्। बोधि-चित्तमिति स्मृतमिति अग्रेपयोगतन्त्रेष्वेवं अभिप्रापयति। आदिकर्मिकादीनां तु बोधिचित्तं सर्वसत्त्वान[3]नुत्तरायां सम्यक्सम्बोधौ प्रतिष्ठापया[4]मीति चित्तमात्रम्। पुनस्तत्रैव देशितम्—

समाजं मीलनं प्रोक्तं सर्वबुद्धाभिधानकम् ॥ ६ ॥

अरूपिणाम् अनादिनिधनत्वासम्भवाद्धर्मकाया एव बुद्धाः। तेषां मीलनं सर्वतथागतज्ञानवज्रधरत्वमेव निर्दिष्टमन्यथा रूपकायेन यदि मीलनं स्यात् परमाणु-प्रमाणादि[5] सर्वतथागतानां मीलने आकाशमपि

---

[1] H omits ॰परिज्ञान।
[2] HB ॰भूतेन।
[3] H ॰त्त्वानु॰।
[4] B ॰पयिष्या॰।
[5] HN ॰पि।

प्रपूर्य्याधिकतरा[1] भवेयुः। सर्वशब्दस्य निरवशेषत्वात् चित्तानामल्पानां मीलनं युज्यते। पुनस्तत्रैव तथा उत्पन्नक्रमाणां अक्षतं सम्यग् ज्ञानम्। एवं च तत्रैव प्रकाशितम्—

ध्यायन्ति येऽमुं सुविशुद्धमनादिभावमित्यादि।

प्रथमपटलेऽपि—

अथायं सर्वाकाशधातुः सर्वतथागतवज्रमयसंस्थितोऽभूत्।

पुनः—

अनुत्पन्नेषु धर्म्मेषु न भावो न च भावना।
आकाशवद्योगेन इति भावः प्रगीयते॥ ७॥

पुनः—

प्रकृतिप्रभास्वरा धर्म्मा आदिशुद्धा नभःसमाः।
बोधिनाऽभिसम[यमिदं] बोधिनयं दृढम्॥ ८॥

नवमे पटले—

क्रमशोत्पत्तिकं चैव क्रमशोत्पन्नकस्तथा।

तद्यथा—अपि नाम कुलपुत्रा आकाशः सर्वत्रानुगतः। आकाशानुगतानि सर्वधर्माणि, तानि न कामधातुस्थितानि नारूपधातुस्थितानि न चतुर्म्महाभूतस्थितानि। एवमेव कुलपुत्राः सर्वधर्म्मा अनुगन्तव्याः। इममर्थं च संविज्ञाय तथागताः सर्वसत्त्वानां चाश्रयं विज्ञापयन्त एवं धर्मं देशयन्ति। एवमेव कुलपुत्रा आकाशवद्निरुक्तास्ते तथागतसमया अनुगन्तव्याः। तद्यथा— अपि

---

[1] H ०रो।

[2] H ०ने०।

नाम कुलपुत्राः काण्डं च मथनीयं च पुरुषहस्तव्याया-म[ञ्च] प्रतीत्य धूमः प्रादुर्भवति अग्निमभिनिर्वर्त्तयति। स चाग्निर्न काण्डे स्थितो न मथनीयस्थितो न पुरुषहस्त-व्यायामस्थितः। एवमेव कुलपुत्राः सर्वतथागतवज्रसमया अनुगन्तव्याः गमनागमनाद्यैरिति।

दशमे पटले—

कायवाक्चित्तवज्राणां कायवाक्चित्तभावनम्।
निर्विकल्पनिरालम्बसमता न क्वचित् स्थितम्॥ ९॥

द्वादशे पटले—

खतुल्यसमयभूतेषु निर्विकल्पस्वभाविषु।
स्वभावशुद्धधर्मेषु नाटकोऽयं प्रभाव्यते॥ १०॥

षोडशे[1] पटले—

पातनं वज्रसूत्रस्य रजसोऽपि निपातनम्।
न कार्य्यं मन्त्रतत्त्वेन कारयेत् नापि दुर्लभाः॥ ११॥

मण्डलसूत्रस्य[2] रजःपातनादिकं च न कुर्य्यात्। मन्त्र-तत्त्वेनेति मनःसन्त्राण[3]भूतत्वात् मन्त्रज्ञानं सम्यग्ज्ञानं निदर्शितं इत्यर्थः। यद्येवं मोहात् करोति चेत् बोधि-र्दुष्करो भवतीति। मण्डलेनादि[4]कर्म्मिकसत्त्वकृपाकरुणा-बुद्धत्वं वज्रध[रत्वं][5] च दुर्लभं भवतीत्यर्थः। तस्मात् सम्यग्-ज्ञानाभियुक्तेन महायोगिना मण्डललिखनप्रवेशाभि-षेकादिकं निषिद्धं इति।

---

[1] B ०शमे।
[2] HN ०त्रेण।
[3] B ०न्त्रास०।
[4] Repeated in HN
[5] MSS ०र।

लोचना वज्रसत्त्वानां दीप्य[1]माना स्वभावतः।
ज्ञानं ताथागतं शुद्धं तद्वैरोचनमुच्यते ॥ १२ ॥

सर्वाशि[2]ष्टजनैः ज्ञानं मिथ्यागुरुजनैरपि।
अप्रकम्प्यस्वभावत्वात् अक्षोभ्योऽसौ प्रकथ्यते ॥ १३ ॥

रत्नानि प्रभवन्त्येव बुद्धादि नियतो ध्रुवम्।
ज्ञानसत्त्वार्थयुक्तं तद् रत्नसम्भवमुच्यते ॥ १४ ॥

अप्रतिष्ठितनिर्वाणं अलिप्तं भवनिर्वृतौ।
असंख्यगुणसंयोगात् अमिताभः स उच्यते ॥ १५ ॥

सर्वसत्त्वार्थकार्याणां प्रसाधकतमः स्वयम्।
अवन्ध्यं तत् महाज्ञानं अमोघसिद्धिरुच्यते ॥ १६ ॥

स्थूलमौदारिकं[3] रूपं त्रैकाल्यपरिभावितम्।
दृश्यते सर्वक्षेत्रस्थं लोचना तेन कथ्यते ॥ १७ ॥

सर्वताथागतं ज्ञानमात्मीयं[4] मामकं यतः।
अन्योन्यव्यापकादेव मामकी तेन तत् स्मृतम् ॥ १८ ॥

सर्वदोषहरं ज्ञानं सर्वताथागतं परम्।
सरद्दलवासिनी ख्याता सर्वसंशोधनोद्यतम् ॥ १९ ॥

महाकरुणया नित्यं जगदुद्धरणाशयम्।
सत्त्वोत्तारणदक्षत्वात् ताराज्ञानं प्रकाशितम् ॥ २० ॥

धातुभूतान् पृथिव्यादीन् बुद्धज्ञानोपभोगिनाम्।
लोचनाद्यास्तु कीर्त्यन्ते सर्वकामोपभोगिनाम् ॥ २१ ॥

---

[1] MSS °य°।
[2] H °नि°।
[3] HB °मानादिकं।
[4] HB °त्मान।

मरणादिभ[यांन्मु]क्तं सर्वतथागतं परम्।
प्र[ज्ञ]ष्टं दमनज्ञानं ततो यमान्तकः स्मृतः ॥ २२ ॥
मिथ्याज्ञानं [निवा]र्य्याशु मूढसत्त्वप्रकाशितम्।
सम्यक् ज्ञानप्रतिष्ठात्मयोगात् प्रज्ञान्तकः स्मृतः ॥ २३ ॥
जगदाह्लादनं सर्वन्नातिश्टल्लन् विचारयन्।
भवेष्टलिप्तसम्बोधिं तेन पद्मान्तकः स्मृतः ॥ २४ ॥
विघ्नादिभिर्विमुक्तात्मा ज्ञानं सर्वार्थसाधकम्।
सर्वबुद्धमयं सिद्धं तेन विघ्नान्तकः स्मृतः ॥ २५ ॥
ज्ञानज्ञेयं विना न स्यात् समापत्तिरतः स्मृता।
त्रिभवाभिमुखं ज्ञानं रागादित्रयसाधनम् ॥ २६ ॥
सर्वबुद्धमयं शुद्धं त्रिमुखं तत् प्रकीर्त्तितम्।
सुविशुद्धस्य सद्भावात् शुक्लवर्णं प्रकाशितम् ॥ २७ ॥
सर्वदा [नानु]पीतत्व रक्तं कारुण्यवत् सदा।
रत्नत्रयोपकारादि कर्त्तुर्दमनमुच्यते ॥ २८ ॥
ज्ञानं तत् कृष्णमित्याहुर्जगदर्थकरं परम्।
नानोपायविचित्रत्वात् श्यामवर्णं प्रकाशितम् ॥ २९ ॥
रूपाद्यायतनादीनि प्रभुञ्ज्यन्ते स्वयं यतः।
षड्भुजं कथ्यते तेन ज्ञानं बौद्धं तथागतैः ॥ ३० ॥
बोधिचित्तं भवेद् वज्रं प्रज्ञा घण्टा विधीयते।
चक्रं अज्ञानच्छेदाच्च रत्नं तु दुर्लभादपि ॥ ३१ ॥

---

[1] MSS ०यमु०। 　[2] MSS ०द्रु०।
[3] MSS विन्ना०। 　[4] B ०श्री।
B ०यैवि०। 　[6] MSS ०दानु०।
[7] HN ०यु०।

भवदोषैरलिप्तत्वात् ज्ञानं तत् पद्ममुच्यते।
खड्गः क्लेशारिसंच्छेदात् उत्पलं स्रवनात् ततः ॥ ३२ ॥
संसारजलनिमग्नैर्यस्मात् ज्ञानं न ज्ञायते।
बुद्धानुगानां सत्त्वानां ताडनान्मुद्गरं स्मृतम् ॥ ३३ ॥
दण्डेन शासनाद्दण्डज्ञानं तत् सत्त्वशासकम्।
अन्योन्यव्यापकाभेदा[त्] विश्ववज्रमिति स्मृतम् ॥ ३४ ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् सर्वतथागतकायवाक्चित्तहृदयवज्रयोषिद्भगेषु विजहार एकस्मिन्नेव काले। भगवानैश्वर्यादिगुणयुक्तत्वात्। हृदयं ज्ञानं तदेव वज्रयोषित् अभेद्यप्रज्ञास्वभावत्वात्, तदेव भगं[1] सर्वक्लेशभञ्जनात्, तेषु सर्वतथागतकायवाक्चित्तहृदयवज्रयोषिद्भगेषु विजहार।

एतदुक्तं भवति— सर्वतथागतज्ञानेषु अन्योन्यव्याप्यव्यापकभूतेषु योगिनो ज्ञानं तदन्तर्गतमेव सर्वथैव स्थितमिति तत्त्वं सर्वज्ञा[2]नेषु क्रमेण स्थितमित्यर्थः[3]। अनभिलाप्यानभिलाप्य इत्यादि अप्रमेयबोधिसत्त्वमहासत्त्वैः सहेत्यर्थः। तेऽप्यनेनैव न्यायेन संस्थिता इत्यभिप्रायः।

उक्तं च तत्त्वसंग्रहे तन्त्रराजे— सर्वतथागतमहाबोधिदृढसत्त्व इत्यारभ्य अनादिनिधनः शान्तो भगवान् महाबोधिसत्त्ववज्रः समन्तभद्रो महाबोधिसत्त्वः सर्वतथागतहृदयेषु विजहार।

---

[1] B भग्न।

[2] H सत्त्वा०।

[3] HN ०ति। HN adds further युगपदेव सर्वेषु ज्ञानेषु स्थितमित्यर्थं which seems to be redundant and is omitted in B

अथ सर्वतथागताः प्राहुः— कथं त्वं कुलपुत्रानुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यसे यस्त्वं सर्वतथागततत्त्वान्यभिज्ञाय दुष्टतराण्युपहस्सीति।

सर्वार्थसिद्धिबोधिसत्त्व आह— भगवन्तः सर्वतथागताः आज्ञाप[यथ][1] कथं प्रतिपद्यामीदृशं तत्त्वमिति।

तथागता आहुः— प्रतिपद्यस्व कुलपुत्र स्वचित्तप्रत्यवेक्षणसमाधानेन प्रकृतिसिद्धेन रुचिजप्तेन मन्त्रेणेति ओं चित्तप्रतिवेधं करोमीति।

महाबोधिसत्त्व आह। आ ज्ञातो भगवन्तः सर्वतथाग[ता]ः[2] स्वहृदि चन्द्रमण्डलाकारं पश्यामि।

प्रकृतिप्रभास्वरमिदं कुलपुत्र चित्तं चन्द्रमण्डलवत्। चन्द्रमण्डलं प्रकृतिप्रभास्वरं तद्वत् ज्ञानम्। यथाक्रमाच[न्द्र][3]मण्डलं सम्पूर्णं भवति तद्वत् प्रकृतिप्रभास्वरं चित्तरत्नमपि परिपूर्णं भवति। यथा चन्द्रमण्डलमागन्तुककलाभिः सूर्यमण्ड[ल][4]रश्म्यपगमात् क्रमात् पूर्णं दृश्यते तद्वत् प्रकृतिपरिशुद्धं चित्तरत्नमपि सर्वक्लेशमलकलङ्कापगमक्रमात् परिपूर्णबुद्धगुणं दृश्यते इति।

अद्वयसमताविजयेऽपि—

ॐ सर्वतथागतज्ञानवज्रस्वभावात्मकोऽहम्।

पुनर्नवमपटले—

स्वच्छं हि सर्वसत्त्वानां चित्तं शान्तं प्रभास्वरम्।
अलिप्तं विविधैर्भावैश्चित्ताद्यत्तत्त्वभावना ॥ ३५ ॥

---

[1] MSS ॰मह॰।
[2] MSS ॰येत्।
[3] MSS ॰त्रै॰।
[4] MSS ॰क्र॰।

बुद्धकायविधानज्ञ उपभुंजीत तत्त्वतः ।
अन्यथा नैव सिध्यन्ति सर्वमन्त्रोदयाः शुभाः ॥ ३६ ॥

पुनश्च त्रयोदशे पटले—

मण्डलं सर्वबुद्धानां तत्त्वज्ञानाच्च[1] मण्डलम् ।
साधकानामिदं तत्त्वं चिन्तामणिरि[2]वाद्भुतम् ॥ ३७ ॥
गुह्येन्दुमणितिलकं तन्त्रराजेऽपि कथितम् ।
सर्वाङ्गभावनाऽतीतं कल्पनाकल्पवर्जितम् ॥ ३८ ॥
मात्राबिन्दुसमातीतमेतत् मण्डलमुत्तमम् ।

पुनस्तत्रैव—

स चैव सर्वभावेन सर्वदा समवस्थितः ।
अनादिनिधनः सत्त्वो वज्रसत्त्वः परं सुखम् ॥ ३९ ॥

पुनः—

बोधिचित्ताद्दते नान्यत् सौख्यमस्ति त्रिधातुके ।
बोधिचित्तमयं सौख्यं सर्वसौख्यप्रसर्पणम् ॥ ४० ॥

महासमयतन्त्रेऽपि निर्दिष्टम्—

अहं च कामरूपाग्रः सर्वबुद्धैरधिष्ठितः ।
मयाऽपि धर्मकायाग्राः सर्वबुद्धा ह्यधिष्ठिताः[3] ॥ ४१ ॥

पुनश्च—

सुरतो भगवान्नित्यो वज्रसत्त्वो महासुखः ।
अतः प्रसूतिर्यस्मात्तस्मादिदं न च लक्ष्यते ॥ ४२ ॥

---

[1] B ०न च ।
[2] B ०मि० ।
[3] HB हृदि स्थिता ।
[4] MSS ०त्रेषामि० ।

पुनश्च—

महासत्त्वो महावज्रो वज्रसत्त्वस्तदुच्यते ।

तस्य तत्त्वम्—

अनादिनिधनः सत्त्वो वज्रसत्त्वो महारतः ।
समन्तभद्रः सर्वात्मा बोधिवुद्धः विधातुके ॥ ४३ ॥

स्थावरः सर्व एवाग्रो महावज्रो महाबलः ।
जङ्गमश्चित्तसंस्कारात् सर्वकृत् सर्व एव हि ॥ ४४ ॥

उक्तं च मायाजालेऽपि—

ज्ञानैकचक्षुरमलो[1] ज्ञानमूर्त्तिस्तथागतः ।
निष्फलः सर्वगो व्यापी सूक्ष्मबीजमनाश्रवः ॥ ४५ ॥

बोधिचित्तोत्पादः[2] सप्तमपटले[3]—

अनुत्पन्नेषु धर्मेषु अनक्षरमनालयम् ।
कल्पकल्पनया वर्ज्यं उत्पादोऽयं प्रगीयते ॥ ४६ ॥

पुनस्तत्रैव—

प्रकृ[त्या]भास्वरा धर्मा आदिशुद्धा ह्यनाविलाः[4] ।
न बोधिर्नापि बुद्धत्वं न सत्त्वो नापि जीविता ॥ ४७ ॥

श्रीवज्रमण्डलालङ्कारे निगदितम्—

सर्वत्र सर्वधातौ तु सर्वसत्त्वा[श्च] सर्वतः ।
सर्वकायमयं व्याप्य चित्तधारेव संस्थिता ॥ ४८ ॥

अनाश्रवा[दि]चिन्ता च निर्मला निर्ममा स्वयम् ।
शून्या गगनसमा चै[5]व भावाभावविवर्जिता ॥ ४९ ॥

---

[1] H ०लो, B ०रो ।
[2] H ०त्तोदय०, N ०त्त० ।
[3] HN ०पटलः सप्तमः, B ०प्रथमपटले ।
[4] HN हृता विना ।
[5] MSS ०स्वै० ।

अनादिनिधना शान्ता सर्वधर्म्मेश्वरी च सा ।
बिभ्रती सर्वरूपाणि सत्यद्वयसमाश्रिता ॥ ५० ॥
परमा परमार्थेन धर्म्मकायेति सा स्मृता ।
सर्वेन्द्रियं च विज्ञानं चित्तं सर्वत्र सर्वतः ॥ ५१ ॥
मनोज्ञानमिति ख्याता प्रज्ञा बुद्धिर्मतिः स्मृतिः ।
विपश्यना च सर्वज्ञज्ञानस्य[1] व्यवदानतः ॥ ५२ ॥
शाश्वतोच्छेदनिर्म्मुक्ता अविकल्पद्वय[वर्जिता] ।
संवृत्या परमार्थेन द्विधा तस्याः[2] प्रकल्पना ॥ ५३ ॥
यथेन्धनं समाश्रित्य तेजोबीजं तु संस्थितम् ।
तिलेषु वा यथा तैलं रस इक्षोः प्रकल्पितः ॥ ५४ ॥
पुष्पेषु वा यथा गन्धो दध्नि नवनीतं[3] यथा ।
सर्वत्र सर्वसत्त्वेषु स्थावरे जङ्गमेषु च ।
रूपारूपगता चापि महामुद्रा प्रतिष्ठिता ॥ ५५ ॥

पुनः—

ज्ञानममरणमलक्षणमघोषमनादिशुद्धं विमलं प्रभास्वरं अनभिलाप्यमिति ।

सम्बर[4]तन्त्रे निगदितम्—

न योगः प्रतिबिम्बेषु निषिक्तादिषु जायते ।
बोधिचित्तमहायोगात् योगिनस्तेन देवताः ॥ ४६ ॥

---

[1] MSS add ज्ञेया सङ्क्षेप° ।
[2] HB विधातव्या ।
[3] HB °तक्र ।
[4] HN सर्व° ।

बोधिचित्तं इदं वज्रं सर्वबुद्धत्वमात्मनः ।
तस्मात् सार्वात्म्ययोगेन सर्वबुद्धत्वमाप्नुते ॥ ४७ ॥
एनं पश्यन्ति संयुक्तं सर्वथा पूजयन्ति [ये] ।
दृष्टास्तैः पूजिताश्चैव सर्वबुद्धा भवन्ति हि ॥ ४८ ॥
दर्शनस्पर्शनाभ्यां च सर्वबुद्धस्य वाऽस्य हि ।
अमण्डलप्रविष्टा[श्च] दृष्टसत्या भवन्ति हि ॥ ४९ ॥
दर्शनस्पर्शनाभ्यां च श्रवणस्मरणेन च ।
सर्वपापैर्विमुच्यन्ते पूज्यन्ते सर्वसिद्धिभिः ॥ ५० ॥
सर्वयोगसमायोगैः सर्वबुद्धस्य वाऽस्य हि ।
[नार्योऽपि]हि विमुच्यन्ते बुद्धबोधिं स्पृशन्ति च ॥ ५१ ॥
सर्वंच सर्वतः सर्वं सर्वथा सर्वदा स्वयम् ।
सर्वबुद्धमयं सिद्धं स्वमात्मानं प्रपश्यति ॥ ५२ ॥
सर्वात्मसंस्थिताश्चैनं पूजयन्ति तथागताः ।
सर्वपूजामहामेघव्यूहप्रसरसञ्चयैः ॥ ५३ ॥
सर्वभोगोपभोगै[श्च] सेव्यमानैर्यथासुखम् ।
स्वाधिदैवतयोगेन स्व[मा]त्मानं प्रपूजयेत् ॥ ५४ ॥

पुनश्च—

विचित्रकर्मयोगेन विचित्रविनयात्मना ।
सत्त्वानां विनयार्थाय तदन्ये विधयः स्मृताः ॥ ५५ ॥

पुनः—

अनादिनिधनः सत्त्वो वज्रसत्त्वः परं यतः ।
सुभगेति।च विख्यातो सुस्थितो बुद्धमुद्रया ॥ ५६ ॥

---

[1] MSS ययेन । [2] MSS ०पि । [3] ... प ।

पुनश्च—

विचित्रकर्म्मयोगेन विचित्रविधिकाङ्क्षिणाम् ।
बुद्धवज्रधराद्यास्तु कृतका विनयाः स्मृताः ॥ ५७ ॥

ग्रन्थबाहुल्यभयात्परमाद्यगुह्यघनोच्चयादि न लिखित-मिति ।

ज्ञानसिद्धौ तन्त्रोक्ततत्त्वाक्षरपरनिदर्शनपरिच्छेदः पंचदशः ॥

# षोडशः परिच्छेदः ।

एवं ज्ञानवरं सम्यगुपायेन समायुतम् ।
भावयित्वा सुतीर्थ्यात्मा जन्मन्यत्रैव सिध्यति ॥ १ ॥

उपायः करुणामूलं बोधिचित्तं सुसंस्कृतम् ।
समता सर्वसत्त्वेषु चिरत्नं वरपूज्यता ॥ २ ॥

आसाक्षात्करणं शून्यं सर्वकामविरागिता ।
परिभो[गोऽ]पि पूजार्थं सर्वताथागतं वहेत् ॥ ३ ॥

प्रणामसमादितः कृत्वा यावती परिणामना ।
उपाय [ए]ष संबुद्धैः करुणादिः प्रदेशितः ॥ ४ ॥

एवं सोपायविद्योगी सर्वबुद्ध इवापरः ।
न तस्योपद्रवं किञ्चित् सदा सर्वत्र विद्यते ॥ ५ ॥

मन्त्रमुद्रादियोगेन परीक्षा परिकीर्त्तिता ।
सर्वागमनिबन्धेषु सर्वबुद्धैश्च [त]त्सुतैः ॥ ६ ॥

तैरेव ससुतैर्बुद्धैः कल्पकोटिशतान्तरम् ।
रक्षा कृता तथा नैव यथैव ज्ञानभाविनः ॥ ७ ॥

चतुरीर्यापथैर्युक्ता भावना समुदाहृता ।
स्थानं च योगिना रोच्यं सर्वसौख्यप्र[दा]यकम् ॥ ८ ॥

नोपवासरतो योगी न स्ना'नशुद्धिकल्पनः ।
नानाकल्पविविक्तात्मा भवेद् योगी वरात्मकः ॥ ९ ॥

कायिकं मानसं दुःखं नावकाशं प्रदापयेत् ।
सर्वसौख्यसमायुक्तः सिध्यते नात्र संशयः ॥ १० ॥

---

¹ HN स्था० ।

ज्ञातयः सर्वसत्त्वा वै न परोऽस्त्यत्र पद्धतौ ।
तस्मान्न कुचचित् ग्राह्यविशेषो ह्युपलभ्यते ॥ ११ ॥
स्थाने देशे गृहे वाऽथ पुस्तके प्रतिमासु च ।
सर्वग्राह्यविनिर्मुक्तो योगी बुद्धैस्तु वर्णितः ॥ १२ ॥

ज्ञानसिद्धौ उपायनिर्देशनपरिच्छेदः षोडशः ।

# सप्तदशः परिच्छेदः ।

सम्यग्ज्ञानसमुत्पन्नो योगी प्रार्थयते यदा ।
अभिषेकः प्रदातव्यस्त्रैधातुकनमस्कृतः ॥ १ ॥
सर्वोपकरणैर्युक्तः सर्वपूजासुसंस्कृतः ।
आराधयेद्वरं वज्रगुरुं सर्वगुणार्णवम् ॥ २ ॥
भक्ष्यभोज्यादियुक्तेन पुष्पगन्धादिकेन च ।
सम्पूज्य मण्डलं कृत्वा कृताञ्जलिपुटो गदेत् ॥ ३ ॥
सम्यग्ज्ञानवरं प्राप्तं प्रसादात् करुणात्मक ।
स्वसंवेद्यस्वभावं च आदत्तमपि निश्चयम् ॥ ४ ॥
इदमेवाद्वयं ज्ञानं नान्यज्जगति विद्यते ।
पीतं धर्मामृतं प्राप्य प्रार्थयेत महागुरुम् ॥ ५ ॥
सर्वसत्त्वार्थकार्य्याणि यथाशक्त्या करोम्यहम् ।
धर्मदाने नयेत् कोऽपि [हि]तं दास्याम्यहं यथा ॥ ६ ॥
अभिषेक[व]रं रत्नं प्रसादात् प्राप्यते यदि ।
गृहीतुमहमिच्छामि प्रसादं कुरुताभयम् ॥ ७ ॥
गुरुणापि हि दृष्टेन गुणपूर्णो जना यदि ।
[एवं देयं प्रसादादि][1] सर्वबुद्धानुवर्त्तितम् ॥ ८ ॥
वक्तव्यं कृपया युक्तं वचः सर्वार्थसम्पदम् ।
धर्मराज्याभिषेकाग्रम[2]भिषेकं निरुत्तरम् ॥ ९ ॥

---

[1] MSS एवमस्तप्रदास्यादि (?)
[2] HB ०ग्रैर०, N ०ग्रेर० ।

ततो दिनावधिं [1]ज्ञात्वा शिष्याय वचनं वदेत् ।
अमुकस्मिन् दिने वत्स करिष्यामि प्रपूरणम् ॥ १० ॥

मनसा भवतो वश्यं कुरु चित्तमतो दृढम् ।
दुष्पूरणं यतो न स्यात्तथा कार्य्यं महामते ॥ ११ ॥

ततो दिनावधिं प्राप्ते सर्वबुद्धान् प्रपूजयेत् ।
आर्य्यसङ्घाय भोज्यं च दद्याच्चैव सदक्षिणम् ॥ १२ ॥

गणभोज्यमुदारं च गुरूणां च विशेषतः ।
यथाशक्त्या त्वनाथानां [विधिं सर्वं][2] समाचरेत् ॥ १३ ॥

[3]ततो गुरोर्दक्षिणाद्या सर्वबुद्धानुवर्णिता ।
सर्वतो विश्वगुरवे सिद्धमुत्तरदक्षिणम् ॥ १४ ॥

यस्य यद्दुष्प[4]रित्याज्यं तदुत्तममिति स्मृतम् ।
यद्यदिष्टतरं किञ्चित् विशिष्टतरमेव वा ।
तत्तद्धि गुरवे देयं तदेवाक्षयमिच्छता ॥ १५ ॥

अथास्याभिमतं स्याद्वै चित्तं कार्य्यमथापि वा ।
तद्देयमथवा कार्य्यं स्वल्पमप्युत्तमं हितम् ॥ १६ ॥

अथोत्तमं भवेद्यस्य [दद्याच्चेत् तं न दक्षिणाम्][5] ।
सर्वाचार्य्याप[6]मानेन स नित्यं दुःखमाप्नुते ॥ १७ ॥

सम्बरतन्त्रोक्ता दक्षिणेयम् ।
आत्मानमपि निर्य्यात्य पुनर्मूल्यैस्तु मोक्षयेत् ।
नानातन्त्रेषु निर्दिष्टा दक्षिणेयं निरुत्तरा ॥ १८ ॥

---

[1] B omits ज्ञात्वा दिनावधि ।  [2] MSS सर्वविधि ।
[3] This line may better be read as ततो दद्यात् सर्वबुद्ध वर्णिता गुरुदक्षिणाम ।  [5] MSS नैव दद्यात्तद्दक्षिणाम् ।
[4] H ०द्दुख० ।
[6] HB ०पस्थाने० ।

ततः—

सर्वबुद्धमयं योगं सर्वसम्पत्सुखोदयम् ।
अगम्यं सर्वसत्त्वानां लोकनाथेन भाषितम् ॥ १९ ॥
सर्वतायागतं चित्तं सर्व[वाक्काय][1]सम्भवम् ।
द्वयोरप्येवमाज्ञाय अधिष्ठानं प्रयोजयेत् ॥ २० ॥
मानसं सर्वमेवेदं कायिकं वाक्समुद्भवम् ।
सर्वबुद्धमधिष्ठायानुज्ञां तस्य प्रदापयेत् ॥ २१ ॥
अभिषिक्तमिमं बुद्धैरतीतानागतैरपि ।
सर्ववज्रधरैश्चापि सर्ववज्रधराय च ॥ २२ ॥
एककार्योऽसि बुद्धानां त्वमिदानीमनाहतः[2] ।
धर्माभिषेकदानेन कुरु सत्त्वेष्वनुग्रहम् ॥ २३ ॥
रत्नत्रये यथाशक्त्या रक्षा कार्य्या शुभोदया ।
वज्रसत्त्वा[दिकं][3] कार्य्यं सर्वबुद्धैर्निदर्शितम् ॥ २४ ॥
मय्य[4]वमन्यना कार्य्या न त्वया वरवज्रिणा ।
विषमा परिहारेण कालं ज्ञात्वा सुदारुणम् ॥ २५ ॥
घोरं नरकदुःखौघं मा भूत् कल्पशतान्तरम् ।
मिथ्याधर्मसमाचारा ये तु लोकविडम्बकाः ॥ २६ ॥
न तेषु सम्भवं कुर्य्यात् सद्धर्मप्रतिपक्षकाः ।
मूढा धर्मविहीनास्ते स्व[5]सुखोदयमानसाः ॥ २७ ॥
पुण्यहीनाः परां बोधिं नैव प्राप्स्यन्ति दुर्नयाः ।
इतस्ततश्च संसारे ते भ्रमन्ति हि पङ्क्तौ ॥ २८ ॥

---

[1] MSS ०कायवाक० ।
[2] MSS ०ते ।
[3] MSS ०रिह ।
[4] B नाप्य० ।
HB स्व० ।

लोकमोहनशीलाश्च सद्धर्मप्रतिपक्षकाः ।
एवंविधा अनेके च[1] धर्म्मधमसमाश्रयाः ॥ २९ ॥
न तेषां सुगतौ जन्म बुद्धत्वं अपि दुर्लभम् ।
एतेभ्यस्तु सदा रक्षा भवित[व्या][2] महामते ॥ ३० ॥
मारपाशनिबद्धास्ते परात्म[विधि][3]नायकाः ।
कुरु सत्त्वार्थमधुना सर्वबुद्धाधिप स्वयम् ॥ ३१ ॥
यथाविनयतो धर्म्मं प्रकाशय जनेऽखिले ।
संशयं नहि धर्म्मे तु कर्त्तव्यमधुना त्वया ॥ ३२ ॥
नाभिषेकं पुनर्ग्राह्यं [त्वयेदानीं महामते] ।
सम्यक् धर्म्मपरो विद्वान् त्रैधातुकनमस्कृतः ।
अभिषेकं त्वया प्राप्तं विद्यते न [ह्यतः][4] परम् ॥ ३३ ॥

सर्वताथागतज्ञानवराभिषिक्तस्य योगिनः[5] माहात्म्यं श्रीसमाजे निर्द्दिष्टम्— तद्यथा सर्वतथागतकायवाक्चित्तवज्रगुह्यसमभिषिक्तो भगवन्तः आचार्य्याः सर्वतथागतैः सर्वबोधिसत्त्वैश्च कथं द्रष्टव्यः ?

सर्वतथागताः प्राहुः— बोधिचित्तं वज्रं इव कुलपुत्राः सर्वतथागतैः सर्वबोधिसत्त्वैश्च द्रष्टव्यम् । तत् कस्माद्धेतोः ? बोधिचित्तवज्रश्चाचार्य्यो द्वयमेव तदधिकारं यावत् कुलपुत्राः संक्षेपतः कथयामि । यावन्तो दशदिग्लोकधातुषु बुद्धाः बोधिसत्त्वाश्च तिष्ठन्ति प्रयन्ति च सर्वे ते[6] त्रिकालसमयमागत्य तमाचार्य्यं सर्वतथागतपूजाभिः संपूज्य सर्व-

---

[1] H ॰काश्च ।
[2] MSS ॰व्योऽस्मि ।
[3] HB ॰नवि॰, N ॰त्रिवि॰ ।
[4] MSS ह्यत ।
[5] HN जन्तुना ।
[6] B सर्वत ।

बुद्धक्षेत्रे पुनरपि प्रकाशयन्ति। एवं च वाग्वज्राक्षरं निश्चारयन्ति। पितास्माकं सर्वतथागतानां मातास्माकं सर्वतथागतानामिति। तद्यथा—अपि नाम कुलपुत्रा यावन्तो बुद्धा भगवन्तो दशसु दिक्षु प्रचरन्ति तेषां च बुद्धानां भगवतां यावन्तः कायवाक्चित्तपुण्यस्कन्धा आचार्यस्य रोमकूपाग्रविवरे विशिष्यते। तत् कस्मात् हेतोः? बोधिचित्तं कुलपुत्राः सर्वबुद्धज्ञानानां सारभूत-मुत्पत्तिभूतं यावत् सर्वज्ञज्ञानाकरमिति।

ज्ञानसिद्धौ वज्रज्ञानाभिषेकविधिः सप्तदशः।

# अष्टादशः परिच्छेदः।

महाज्ञानप्रभवितमहायोगीश्वरस्य प्रभावं कल्पकोटिशतेनापि सर्वतथागतैरपि न शक्यं वर्णयितुम्। श्रीसम्वरोक्तं किञ्चिन्मात्रं कथ्यते—

सर्वत्र सर्वतः सर्वं सर्वथा सर्वदा स्वयम्।
सर्वबुद्धादिभि[र्लोके][1] सर्वभावान् भवत्यसौ ॥ १ ॥

बुद्धक्षेत्रेषु सर्वेषु बुद्धनिर्वाणमावहन्।
दर्शय बुद्धकार्याणि बुद्धनिर्माणमायया ॥ २ ॥

बुद्धवज्रधरादीनां विश्वरूपविधात्मकैः।
त्रैधातुकमहाराज सर्वकार्याणि दर्शय ॥ ३ ॥

सन्धिविग्रहपूर्वाणि राज्यं मायाविकुर्वितम्।
त्रैधातुकमहाराज अवष्टभ्य च साहसैः ॥ ४ ॥

प्रमादोऽयं जगत् सर्वं विश्वनर्त्तित दर्शय।
एवमायास्त्वनन्ताग्राः धर्मधातुसमागमैः ॥ ५ ॥

आकाशधातुपर्यन्ताः सर्वबुद्धादयो वराः।
[2]समाविशन्ति सर्वात्मा सिद्धैश्वर्यप्रसिद्धिभिः ॥ ६ ॥

सर्वतो विश्वविनयं सत्त्वधातुं प्रसाधयेत्।
[3]विक्रीडति विचित्रः श्रीवज्रसत्त्वस्तथागतः ॥ ७ ॥

---

[1] MSS °रचलादिवत(?)।
[2] This line is read after विश्वसम्बरे in all MSS
[3] This line is read before रतिक्रीडाविकुर्वित in all MSS

रतिक्रीडाविकुर्वितः सर्वतो विश्वसम्बरैः[1] ।
सर्वाकाशावकाशः श्रीवज्रसत्त्वः प्रतिष्ठितः ॥ ८ ॥

इत्याह भगवान् श्रीवज्रसत्त्वः—

सर्वशुद्ध्यधिमोक्षेण प्रसह्य बलवानधः ।
पराक्रमक्रमणात् तु सर्वलोकान् प्रमर्दयेत् ॥ ९ ॥
अन्यन्तु[2] दुष्टरौद्राग्रं सत्त्वधातुमनेकधा ।
पापैश्चौरैरवस्कन्दैः सर्वमेव विशोधयेत् ॥ १० ॥
च्छलेन मायया चैव प्रसह्य बलवानधः ।
पञ्चायुधनिबन्धैश्च सर्वलोकान् जयेत् तदा ॥ ११ ॥
विजित्य सकलां सिद्धिं जगत् स्थावरजङ्गमम् ।
विचित्रविनयोपायैः स्वपराननुपालयेत् ॥ १२ ॥
कामिनीनां भवेत् कामो रौद्राणां रौद्रमुत्तमम् ।
सौम्यानां परमं सौम्यं [हठानां] हठविक्रमः ॥ १३ ॥
परमेशं समाक्रम्य प्रसह्य बलवान्धः ।
उमादेवीं समाक्रम्य चोपभोगैर्भुनक्त्यसौ ॥ १४ ॥
नारायणं समाक्रम्य प्रसह्य बलवानधः ।
रूपिणीं तु समाक्रम्य[4] उपभोगैर्भुनक्त्यसौ ॥ १५ ॥
प्रजापतिं समाक्रम्य प्रसह्य बलवानधः ।
प्रशान्तदेवीमासाद्य उपभोगैर्भुनक्त्यसौ ॥ १६ ॥

---

[1] After this the line- ... c., एवमाद्या॰, etc ,
काशा॰ and समावि॰, etc , a ... all MSS.
[2] H ॰त्यन्त॰, B ॰त्यन्य॰ ... नरुव्या ।
[4] HB ॰काम्य । ... ॰ ।

कामदेवं समाक्रम्य प्रसह्य बलवानधः ।
रतिप्रीतिधृत्यैश्वर्य्यं समाक्रम्य भुन[क्त्यसौ] ॥ १७ ॥
एवमाद्यास्त्वनन्ताग्रा वज्रकर्म्माग्रविक्रमाः ।
एवमाद्या विकुर्वन्ति नानातन्त्र[निदर्शनात्] ॥ १८ ॥

ज्ञानसिद्धौ प्रभावनिर्द्देशो नाम अधिमात्रेन्द्रिय-
विधानमष्टादशः ॥

# उनविंशः परिच्छेदः ।

यस्तु सम्यक् न वेत्त्येव मिथ्यातत्त्वसुयोगवान् ।
[मध्येन्द्रियो][1] हि विख्यातस्तत्कृत्यमधुनोच्यते ॥ १ ॥
नमस्कारादिकं सर्वं यत्पूर्वं मार्गमुक्तवान् ।
तत्सर्वमपि कर्त्तव्यं गाथाः सामाजिकास्तथा ॥ २ ॥
सर्वाकारवरोपेतां झटित्येव स्वदेवताम् ।
निष्पाद्य पूर्ववद् योगी मार्गस्थो जपमारभेत् ॥ ३ ॥
अवसाने तु कर्त्तव्यं सर्वबुद्धाः स औरसाः ।
प्रसादं मम कर्त्तव्यं शरण्येऽस्य कृपात्मकाः ॥ ४ ॥
अनादिकालमद्यापि संसारे संसरन्नहम् ।
खिन्नोऽस्मि सर्वदा दुःखैः सम्यग्ज्ञानमपश्यकः[2] ॥ ५ ॥
यथा ज्ञानोदयो भूयात्[3] तथाहं कर्त्तुमुद्यतः ।
क्रमेणानेन संयुक्तो यदि सम्यक् प्रवर्त्तते ।
भवेत् ज्ञानोदयं तस्य न मिथ्यामार्गयायिनः ॥ ६ ॥

ज्ञानसिद्धौ मध्येन्द्रियविधिनिर्देश एकोनविंशतितमः ॥

---

[1] HB सम्यदि॰ N म्यदि॰ ।
[2] HB ॰तः ।
[3] MSS add कुरुष्व तु which does not fit in here.

# विंशतितमः परिच्छेदः ।

मुद्रामण्डलवर्णादिभुजस्थानविभाविताः ।
समाधिचयमुद्रादिद्वाराश्चैव महद्भुजाः ॥ १ ॥
नानाप्रपञ्चनाम्नायात् सर्वे ते मृदवः स्मृताः ।
तेषामपि यथान्यायं ब्रवीमि तत्त्वसम्भवम् ॥ २ ॥
मध्याधिमात्रमार्गेषु प्रतिष्ठाय यथानयम् ।
तन्त्रोक्तं सर्वदा कार्य्यं देवतामन्त्रजापिना ॥ ३ ॥
यदि चित्तं समं यस्य ज्ञानं तस्योदयं भवेत् ।
अन्यथा नहि तत्प्राप्तिः कल्पकोटिशतैरपि ॥ ४ ॥
सर्वदा चिन्तया युक्तो महाकारुण्यवान् सुधीः ।
पूर्वोक्तलक्षणोपेतो योगी ज्ञानवरं[1] लभेत् ॥ ५ ॥
मध्यान्तयोर्द्व[यो]श्चैव भावनामात्रमुख्यता ।
सम्यक् ज्ञानोदयार्थाय प्रोक्ता शून्यमपश्यता ॥ ६ ॥
तत्त्वं विना न बुद्धत्वं तत्त्वं मार्गं विना न [च] ।
[तन्मार्गस्थितयोरेव] प्रतिपद्ज्ञानमावहेत् ॥ ७ ॥
मार्गभ्रष्टो भवेद् यस्तु करुणाहीनचेतसाम् ।
लाभाद्यर्थं प्रपञ्चात्मा न तेषामुदयो भवेत् ॥ ८ ॥

ज्ञानसिद्धौ मृद्विन्द्रियनिर्देशपरिच्छेदः विंशतितमः ॥

---

[1] HB °रो ।

अमुकस्य इदं गुह्यं सर्वतन्त्रेषु गोपितम् ।
तन्निर्दिष्टं मया सम्यक् योगिनां ज्ञानसिद्धये ॥ १ ॥
वज्रज्ञानवरो योगो येषां नैव हि विद्यते ।
भावनां देवतारूपैः कर्त्तुमुद्युक्तचेतसाम् ॥ २ ॥
दर्शनं पुस्तकस्यापि न दातव्यं प्रजानता ।
वज्रज्ञानप्रतिक्षेपात् नरकं यान्ति मोहिताः ॥ ३ ॥
तेषां नरकहेतुत्वात् सोऽ[प्य]वीचिं व्रजेन्नरः ।
तत्परानर्थसद्भावाद्रक्षणीयमिति ध्रुवम् ॥ ४ ॥
अन्यथा समयभ्रंशो भवेदिति प्रकाशितम् ।
योगतन्त्रेष्वनेकेषु सर्वबुद्धैः कृपात्मकैः ॥ ५ ॥
विधूतकल्पनाजालं वज्रज्ञानमिदं परम् ।
साधनं वज्रसत्त्वस्य कृतमार्गं सयुक्तिकम् ॥ ६ ॥
साधनोपायिकां कृत्वा यन्मयोपचितं शुभम् ।
तेनास्तु सर्वसत्त्वानां वज्रसत्त्वत्वमुत्तमम् ॥ ७ ॥

॥ श्रीमदोडियानविनिर्गता ज्ञानसिद्धिर्नाम
साधनोपायिका समाप्ता ॥

॥ कृतिरियं श्रीइन्द्रभूतिपादानाम् ॥

---

# INDEX OF VERSES.

## अ

द

ब



भ

# GAEKWAD'S ORIENTAL SERIES.

Critical editions of unprinted Sanskrit Works, edited by competent scholars, and published by the Oriental Institute, Baroda.

BOOKS PUBLISHED.

| | | Rs. A. |
|---|---|---|
| 1. | Kāvyamīmāṁsā : a work on poetics, by Rājaśekhara (880-920 A D ) . edited by C. D Dalal, and R Anantakrishna Sastry, 1916 Re-issue 1924 .. .. | 2-4 |
| | *This book has been set as a text-book by the Bombay and Patna Universities* | |
| 2. | Naranārāyaṇānanda : *a poem on the Paurānic story of* [illegible] *Vas-* [illegible] , com- [illegible] 1221 and 1231 · edited by C. D Dalal and R Anantakrishna Sastry, 1916 .. .. .. | *out of print* |
| 3. | Tarkasaṅgraha : a work on Philosophy (refutation of Vaiśeṣika theory of atomic creation) by Ānandajñāna [illegible] nkarā- [illegible] ialf of [illegible] .. | 2-0 |
| 4. | Pārthaparākrama : *a drama describing Arjuna's recovery of the cows of King Virāṭa, by Prahlādanadeva,* the founder of Pālanpur and the younger brother of the Paramāra king of Chandrāvati (a state in Mārwār), and a feudatory of the kings of Guzerat, who was a Yuvarāja in Samvat 1220 or A.D 1164: edited by C D. Dalal, 1917 .. .. .. .. | 0-6 |
| 5. | Rāṣṭrauḍhavaṁśa : an historical poem (Mahākāvya) describing the history of the Bāgulas of Mayūragiri, from Rāstrauḍha, king of Kanauj and the originator of the dynasty, to Nārāyana Shāh of Mayūragiri by Rudra Kavi, composed in S'aka 1518 or A.D. 1596: edited by Pandit Embar Krishnamacharya with Introduction by C. D. Dalal, 1917 .. .. .. | 1-12 |
| 6. | Liṅgānuśāsana : *on Grammar, by Vāmana, who lived between the last quarter of the 8th century and the first quarter of the 9th century · edited by C. D* Dalal, 1918 .. .. .. .. | 0-8 |
| 7. | Vasantavilāsa : an historical poem (Mahākāvya) describing the life of Vastupāla and the history of | |

| | Rs. A. |
|---|---|
| Guzerat, by Bālachandrasūri (from Modheraka or Modhera in Kadi Prant, Baroda State), contemporary of Vastupāla, composed after his death for his son in Samvat 1296 (A.D. 1240): edited by C. D. Dalal, 1917.* | 1–8 |
| 8. **Rūpakaṣaṭkam**: six dramas by Vatsarāja, minister of Paramardideva of Kalinjara, who lived between the 2nd half of the 12th and the 1st quarter of 13th century: edited by C. D. Dalal, 1918 .. .. | 2–4 |
| 9. **Mohaparājaya**: an allegorical drama describing the overcoming of King Moha (Temptation), or the conversion of Kumārapāla, the Chalukya King of Guzerat, to Jainism, by Yaśahpāla, an officer of King Ajaya- [illegible] | 2–0 |
| 10. **Hammīramadamardana**: a drama glorifying the two brothers Vastupāla and Tejahpāla and their King Vīradhavala of Dholka, by Jayasimhasūri, pupil of Vīrasūri, and an Ācārya of the temple of Munisuvrata at Broach, composed between Samvat 1276 and 1286 or A.D. 1220 and 1239: edited by C. D. Dalal, 1920. | 2–0 |
| 11. **Udayasundarīkathā**: a romance (Campū, in prose and poetry) by Soḍḍhala, a contemporary of and patronised by *the three brothers Chchittarāja, Nāgārjuna*, and Mummunirāja, successive rulers of Konkan, composed between A.D. 1026 and 1050: edited by C. D. Dalal and Pandit Embar Krishnamacharya, 1920 .. | 2–4 |
| 12. **Mahāvidyāvidambana**: a work on Nyāya Philosophy, by Bhaṭṭa Vadindra who lived about A.D. 1210 to 1274: edited by M. R. Telang, 1920 .. .. | 2–8 |
| 13. **Prācīnagurjarakāvysaṅgraha**: a collection of old Guzerati poems dating from 12th to 15th centuries A.D.: edited by C. D. Dalal, 1920 .. .. | 2–4 |
| 14. **Kumārapālapratibodha**: a biographical work in Prākṛta, by Somaprabhāchārya, composed in Saṁvat 1241 or A.D. 1195: edited by Muni Jinavijayaji, 1920. | 7–8 |
| 15. **Gaṇakārikā**: a work on Philosophy (Pāśupata School) by Bhāsarvajña who lived in the 2nd half of the 10th century: edited by C. D. Dalal, 1921 .. .. | 1–4 |
| 16. **Saṅgītamakaranda**: a work on Music by Nārada: edited by M. R. Telang, 1920 .. .. .. | 2–0 |
| 17. **Kavīndrācārya List**: list of Sanskrit works in the collection of Kavīndrācārya, a Benares Pandit (1656 A.D.): edited by R. Anantakrishna Shastry, with a foreword by Dr. Ganganatha Jha, 1921 .. .. | 0–12 |
| 18. **Vārāhagṛhyasūtra**: Vedic ritual (domestic) of the Yajurveda: edited by Dr. R. Shamasastry, 1920 .. | 0–10 |
| 19. **Lekhapaddhati**: a collection of models of state and private documents, dating from 8th to 15th centuries | |

Rs. A.

A.D.: edited by C. D Dalal and G K. Shrigondekar, 1925 .. .. .. .. .. 2-0

20. **Bhavisayattakahā or Pañcamīkahā**: a romance in Apabhramśa language by Dhanapāla (*circa* 12th century): edited by C. D Dalal, and Dr P D. Gune, 1923. 6-0

21. ***A Descriptive Catalogue of the Palm-leaf and Important Paper MSS. in the Bhandars at Jessalmere***, compiled by C. D. Dalal, and edited by Pandit L. B. Gandhi, 1923 .. .. .. 3-4

22, 23. **Paraśurāmakalpsūtra**: a work on Tantra, with commentary by Rāmeśvara and Paddhati by Umānanda: edited by A. Mahadeva Sastry, B.A 2 vols, 1923. 11-0

24. **Tantrarahasya**: a work on the Prābhākara School of Pūrvamimāmsā, by Rāmānujācārya: edited by Dr. R. Shamasastry, 1923 .. .. .. 1-8

25, 32. **Samarāṅgaṇa**: *a work on architecture, town-planning and engineering, by king Bhoja of Dhara (11th century): edited by Mahamahopadhyaya T. Ganapati Shastri, Ph.D. 2 vols., 1924-1925* .. 10-0

26, 41. ***Sādhanamālā***: *a Buddhist Tāntric text of rituals, dated 1165 A D. consisting of 312 small works, composed by distinguished writers: edited by Benoytosh Bhattacharyya, M A, Ph.D. 2 vols., 1925-1928* .. 14-0

27. **A Descriptive Catalogue of MSS. in the Central Library, Baroda.** Vol I (Veda, Vedalaksana and Upanisads), compiled by *G. K. Shrigondekar, M.A.* and K. S. Ramaswāmi Shastri, with a Preface by Dr. B. Bhattacharyya, Ph.D. 1925 .. .. 6-0

28 **Mānasollāsa or Abhilasitārthacintāmani**: an encyclopædic work divided into one hundred chapters,

.. . . . 2-12

29. **Nalavilāsa**: a drama by Rāmchandrasūri, pupil of Hemachandrasūri, describing the Paurānika story of Nala and Damayantī. edited by G K. Shrigondekar and L. B. Gandhi, 1926 .. .. .. 2-4

30, 31. **Tattvasangraha**: a Buddhist philosophical work of the 8th century by S'āntaraksita, a Professor at Nālandā with Pañjikā (commentary) by his disciple Kamalaśila, also a Professor at Nālandā: edited by Pandit Embar Krishnamāchārya with a *Foreword* in English by Dr. B. Bhattacharyya, M.A, Ph D 2 vols 1926 .. .. .. .. .. 24-0

33, 34. **Mirat-i-Ahmadi**: with its Khatimae or Supplement. By Ali Mahammad Khan, the last Moghul Dewan of Gujarat: edited in *the original Persian by* Syed Nawabali, Professor of Persian, Baroda College, 3 vols. (vol. I and III in the Press), *vol. II. 1926* .. 12-0

Rs. A

35 **Mānavagṛhyasūtra**: a work on Vedic ritual (domestic) of the Yajurveda with the Bhāṣya of Aṣṭāvakra: edited with an introduction in Sanskrit *by Pandit* Rāmakrishna Harshaji S'āstri, with a Preface by Prof. B. C. Lele, 1926 .. .. .. .. 5-0

36. **Nāṭyáśāstra**: of Bharata with the commentary of Abhinavagupta of Kashmir: edited by M. Ramakrishna Kavi, M A. 4 vols, vol. I, illustrated, 1926 .. 6-0

37. **Apabhraṁs'akāvyatrayī**: consisting of three works, the Carcarī, Upadeśarasāyana and Kālasvarūpakulaka, by Jinadatta Sūri (12th century) with commentaries: edited by L. B. Gandhi, 1927 .. .. .. 4-0

38. **Nyāyapraveśa**, Part I (Sanskrit Text): on Buddhist Logic of Diṅnāga, with commentaries of Haribhadra Sūri and Pārśvadeva: edited by Principal A. B. Dhruva, M.A., LL.B , Pro-Vice-Chancellor, Hindu University, Benares .. .. .. *Shortly.*

39. **Nyāyapraveśa**, Part II (Tibetan Text): edited with introduction, notes, appendices, etc., by Pandit Vidhusekhara Bhattacharyya, Principal, Vidyabhavana, Visvabharati, 1927 . .. .. .. 1-8

40 **Advayavajrasaṅgraha**: consisting of twenty short works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A.D., edited by Mahāmahopādhyāya Dr. Haraprasad Shastri, M.A , C.I.E., Hon D. Litt. 1927 .. .. 2-0

42. **Kalpadrukośa**: standard work on Sanskrit Lexicography by Keśava: edited with an elaborate introduction and indexes by Pandit Ramavatara Sarma, M A , Sahityacharya of Patna In two volumes, vol. I, 1928 10-0

43. **Mirat-i-Ahmadi Supplement**: by Ali Muhammad Khan. Translated into English from the original Persian by Mr C. N. Seddon, I.C S. (retired) and Prof. Syed Nawab Ali, M.A. Corrected Re-issue, *shortly.* .. 6-8

## BOOKS IN THE PRESS.

1. **Rāmacarita** of Abhinanda, Court poet of Hāravarsa (cir. 9th century A.D ): edited by K. S. Ramaswami Shastri.
2. **Nāṭyadarpaṇa**: on dramaturgy by Ramacandra Suri with his own commentary: edited by Pandit L. B. Gandhi and G K. Shrigondekar, M A.
3. **Nāṭyaśāstra**: Vol II. edited by M. Ramakrishna Kavi.
4. *Jayākhyasaṁhitā: an authoritative Pāñcharātra work*: edited by Pandit E. Kṛṣṇamacaryya of Vadtal.
5. **Buddhist works on Logic**: containing reconstructed texts from Chinese, Tibetan texts and English translation of Chinese texts of ancient authors like Nāgārjuna Vasubandhu, etc. by Prof. Giuseppe Tucci of Italy.

Rs. A.

6 Mānasollāsa or Abhilaṣitārthacintāmani, vol II. edited by G. K. Shrigondekar, M.A.

7. **A Descriptive Catalogue of MSS. in the Oriental Institute, Baroda,** vol. II (S'rauta, Dharma and Gṛhya Sūtras) compiled by the Library staff.

8. **A Descriptive Catalogue of MSS. in the Jain Bhandars at Pattan**; edited from the notes of the late Mr. C. D. Dalal, by Pandit L. B Gandhi, 2 vols

9 **Bhāvaprakāśana** of S'āradātanaya an ancient work on Dramaturgy · edited by Pandit Ramaswami Shastri, Oriental Institute, Baroda and His Holiness Yadugiri Yatiraja Swami, Melkot.

10 **Prajñopāyaviniścayasiddhi** of Anangavajra and **Jñānasiddhi** of Indrabhūti. two important works belonging to the little known Vajrayāna school of Buddhism (8th century A.D ) · edited by Dr B Bhattacharyya, Ph.D.

11. **Siddhāntabindu**: on Vedānta philosophy by Madhusūdana Sarasvati with commentary of Puruṣottama · edited by P. C Divanji, M A., LL M.

12. **Tathāgataguhyaka or Guhyasamāja** · the earliest and the most authoritative work of the Tantra School of the Buddhists: edited by Dr B Bhattacharya, Ph.D., Director, Oriental Institute, Baroda.

13. **Influence of Portuguese on the Asiatic Languages**: Translated into English from Portuguese by Prof. A X Soares, M A., Baroda College, Baroda

14 **Persian Chronicle**: *history of the Safvi Period of Persian History 15th and 16th centuries by Hasan Ramlu.* edited by C. N. Seddon, I C.S *(retired)*, Reader in Persian and Marathi, University of Oxford

15. **Nañjarājayaśobhūṣaṇa**: by Nṛsiṁhakavi *alias* Abhinava Kalidāsa, a work on Sanskrit Poetics and relates to the glorification of Nañjarāja, son of Vīrabhūpa of Mysore: edited by E Krishnamacharya.

## PUBLISHED BY THE GOVERNMENT OF H.H. THE MAHARAJA GAEKWAD OF BARODA.

**Gazetteer of the Baroda State.** By Rao Bahadur Govindbhai H. Desai, B A , LL B., Naeb Dewan, Baroda State, and the late Principal A. B. Clarke, B A. With map 2 volumes, 1923, each Rs. 15.

**Census of India, 1921, Vol. XVII, Baroda.** By Satyavrata Mukerjea, B A , Subah, Baroda Division, formerly Superintendent of Census Operations, Baroda State

In three parts 1921-22—

| | Rs. | As. | P. |
|---|---|---|---|
| Part I Report .. .. | 16 | 8 | 0 |
| „ II Imperial Tables .. .. | 9 | 0 | 0 |
| „ III State Tables .. .. | 4 | 8 | 0 |

---

**Mirat-i-Ahmadi,** the Original Persian Text. Edited by Professor Nawab Ali. In 3 volumes

(*Gaekwad's Oriental Series. Vol II, 1927, Rs. 12. Vols. I and III are in the Press.*)

English Translations of Vols I and II are also in preparation.